EACH POWER CAN BE UNLOCKED BY EATING THEIR FAVOURITE POPPINS. 10 POWERS: ***SHAPE SHIFTER***-GREEN APPLE, ***SPEED***-MANGO, ***FLIGHT***-ORANGE, ***GIANT***-WATERMELON, ***STRENGTH***-RASPBERRY, ***SHRINK***-LYCHEE, ***INVISIBLE***-PINEAPPLE, ***STRETCH***-MUSK MELON, ***FISSION***-BLACK CURRANT, ***FORCE FIELD***-GUAVA.

***RECAP:*** RAM AND SHYAM RESCUE AN ALIEN - ZARTOGAARR, WHAN HIS SPACESHIP CRASHES TO EARTH. IN RETURN HE GIFTS THEM THE DEKATRIX, ***A POWERFUL GADGET*** WITH ***10 POWERS.***




इन हैरतंगेज पावर्स के रहस्य को जानने के लिए विज़िट करें
http://www.parleproducts.com/brands/parlepoppins
और www.chandamama.com//parle/index.php?pHcId=11

**अब तक की कहानी:** ब्लैक होल से गिरने के बाद, राम और श्याम से डेकाट्रिक्स खो जाता है और उनकी उम्र 5 साल बढ़ जाती है. धरती को बचाने के लिए वे बेलाट्रिक्स नाम के एक ग्रह पर जाते हैं.































www.chandamama.com/parle/

# उदयमाना तारा



यदि भवताम् परिचये कुटुम्बे परिसरे कोऽपि अल्पवयस्येव प्राप्तयशा: बाल: अस्ति चेत् कृपया तस्य/तस्या: विवरणं स्वसन्दर्भं दत्त्वा अस्मान् प्रति प्रेष्यताम्।

Young Achievers-RCM,
Chandamama India Ltd,
No:2 Ground Floor, Swathi Enclave, Amman koil street,
Vadapalani, Chennai-26
(or)
online@chandamama.com

## अपेक्षाया: अपि अधिकम्

कॅनडादेशे पदवीपरीक्षानिमित्तं अधिकान् गुणांशान् प्राप्तुं स्वयंसेवकरूपेण सामाजिककार्यं कुर्वन्ति छात्रा:। परन्तु केवलं चतुर्दशवर्षीय: 'हारनूर गिल' इति छात्र: अद्ययावत् '१०००' घण्टा: सामाजिककार्यं कृतवान् अस्ति, यत: स्ववयस: तृतीये वर्षे एव स: स्वयंसेवककार्यम् आरब्धवान्। हारनूरेण एतावत्पर्यन्तं यासु संस्थासु कार्यं कृतं तासु 'Children's AID Society' तथा 'Amazing Kids' इति प्रमुखं संस्थाद्वयम्। सद्य: एव हारनूरेण स्वीया स्वयंसेवीसंस्था निर्मिता "The Jean Green Drive Charity" अस्यां संस्थायां स: नूतनान् तथा प्राचीनान् उपयुक्तपूर्वान् 'जीन्स्' पादांशुकान् सङ्गृह्णाति तथा च स्वज्ञातिषु अन्यत्र च अर्थिषु तान् वितरति। प्रामुख्येन शैत्यकाले जनानां पर्याप्तवस्त्रसुविधा भवतु इति तस्य इच्छा। "कार्यं कुर्वन्नेव नेतृत्वगुणान् सम्पादयितुं शक्नोमि" इति तस्य विश्वास:। तथा च सामजिककार्ये वयस: बाधा भवितुं नार्हति इत्यपि मन्यते स:। अन्यै: छात्रै: अपि आन्तर्जालद्वारा स्वयंसेवककार्यविषये ज्ञानं लब्ध्वा 'स्वसमाजहिताय किं कर्तुं शक्यते?' इति आलोचनीयम्। विज्ञानं गणितं चेति तस्य प्रियौ विषयौ। तथापि भाषाणाम्, इतिहासस्य भूगोलस्य वा पठने नितरां रमते तस्य मन:। सामुद्र-जीवशास्त्रम् अग्रे पठित्वा जीवशास्त्रज्ञ: भवितुम् इच्छति हारनूर:।

भविष्यति काले स्वेन पूर्वमेव आरब्धेन स्वयंसेवाकार्येण सह सामुद्र-पर्यावरणविषये अपि कार्यं कर्तुम् इच्छति हारनूर:।



October 2012 ₹25/-
*Founded by* B. Nagi Reddi and Chakrapani



Published, Printed and Owned by CHANDAMAMA INDIA LTD.,
Published and Printed on their behalf by Prashant Sharad Mulekar
Published At : B-3, Lunic Industries, "B" Cross Rd, Opp.SBI, MIDC, Andheri (E), Mumbai - 400 093.
Printed At :- Mothers Graphics (I) Pvt. Ltd. 91D, Govt. Ind. Estate, Charkop, Kandivali (W), Mumbai - 400 067.
Editor :- Prashant Sharad Mulekar

S

# अन्तरङ्गम्

## चन्दमामा

Volume-3 October 2012 Issue-10

# स्मरणं महात्मन:

विगतवर्षे ऑक्टोबरमासे प्रकाशिते सम्पादकीये अस्माकं वर्तमानकाल एव प्रत्यक्षीभवन्तम् इतिहासम् अहम् उत्साहेन उल्लिखितवान्, परन्तु एकवर्षाभ्यन्तरे एव घटनाचक्रम् अनपेक्षिततया तथा भ्रमितं येन किङ्कर्तव्यमूढतया स्थितिसुधारणार्थं दैवीसाहाय्यापेक्षाया: ऋते मार्गान्तरं नावशिष्टम्। गतवर्षे यश:शिखरम् आरूढवदान्दोलनं ऐषम: विभिन्नकारणवशात् अपयशोगर्तायां न्यपतत्। तथापि ईदृशविघ्नानि अस्माकं निश्चयस्य दार्ढ्याय कल्पन्तां, न तु नैराश्याय जायन्ताम्।

अस्मिन् मासे आचर्यमाण: विजयादशम्युत्सव: अस्मान् बोधयति, धैर्यं बध्नाति च। वानरैकसहाय्येन मनुष्यशरीरिणा अपि रामेण दृढनिश्चयादेव महाबली राक्षसराज: रावण: हत:। तं स्मृत्वा तेनैव दृढनिश्चयेन अर्जितवीर्यै: अस्माभि: भ्रष्टाचार:, अकर्मण्यता, विद्याभाव:, क्षुत्पीडा इत्याद्य: दानवा: हन्तव्या: अस्मद्राष्ट्रं च परमवैभवं नेतव्यम्।

'ॲपल्स् ॲप् स्टोअर्' इत्येतस्मिन् माध्यमे अस्माकं मासिकस्य प्रकाशनात् प्राप्तेन महता प्रतिस्पन्देन लब्धोत्साहा: वयं 'कॉफी टेबल् बुक्', रामायणं च तेनैव माध्यमेन प्रकाशितवन्त:। 'ॲन्ड्रॉईट्', 'मायक्रोसॉफ्ट् विन्डोज् ८.०' इत्येताभ्यामपि माध्यमाभ्यां वयं सर्वविधं साहित्यं प्रकाशयितुकामा: प्रयतामहे। अनेन नूतनप्रयन्तेन प्रीता: अस्मत्पाठका: यथापूर्वं चन्दमामानिर्मातॄन् स्नेहकौमुदीवर्षाविण पुलकितान् क्रियासु:!

*- सम्पादक:*





# वाचकानां पुटोऽयम्



**बा**लमोदकरम् अतिप्रसिद्धं मासिकं चन्दमामा नाम। तच्च सर्वासु भाषासु प्रकाश्यमानं भवति इति ततोऽपि आनन्ददायकम्। विद्यमानेषु बालमासिकेषु तत् प्राचीनतमम् इत्यपि तस्य वैशिष्ट्यम्। हृदयस्पर्शिन्यः तत्रत्याः कथाः। यावज्जीवम् अस्य मासिकस्य पठनानन्दं न त्यक्ष्यामि अहम् इति मम विश्वासः। ***- शुभदीपः, झारखण्ड***

**च**न्दमामायाः नियतवाचकः अहम्। सर्वश्रेष्ठं मासिकमिदम् इति मन्ये। तस्मात् नैकानि नीतिमूल्यानि पठितानि मया। तस्याः आश्चर्यकारिण्यः कथाः मह्यम् अतीव रोचन्ते। न कदाचिदपि विरतो भवामि चन्दमामा-पठनात्। ***- राकेशपाल, भद्रक-ओडिसा***

चन्दमामायां सद्यः प्रकाश्यमानाः कथाः पूर्वतन-कथानां समुज्ज्वलपरम्पराम् अनुसरन्त्यः सन्ति। परन्तु पूर्वतन-चित्राणाम् अपेक्षया आधुनिकानि चित्राणि न तथा सन्तोषकराणि। उत्तमचित्राणाम् अभावः अस्य मासस्य सञ्चिकायाम् अनुभूतः।

***- एम्. व्ही. व्ही. शास्त्री, मछलीपटणम्***

**१९५७** तः चन्दमामायाः निष्ठावान् वाचकः अस्मि। तेषु दिनेषु तस्य मूल्यं ३७ पैसा केवलमासीत्। अधुना भवन्तः काश्चन कथामालिकाः पुनर्मुद्रापयन्तः सन्ति। परन्तु अद्यावधि 'रूपधरण-यात्रेगळू' न कदापि प्रकाशितम्। 'शिथिलालयः' मालिकायाः अनन्तरं एतां मालिकां प्रकाशयन्तु इति अहं प्रार्थये। ***- एस्. जनार्दन, बँगलुरु***

**यदा** अहं चन्दमामायाः पूर्वतनसञ्चिकाम् अपश्यं तदा प्राचीनचन्दमामा-दर्शनस्य अनुभवः मया प्राप्तः। एकैका अपि कथा तथा सुरसा आसीत् यत् का श्रेयसी इति वक्तुं काठिन्यम् अन्वभवम्। नूतन-पुरातनकथासु समानत्वं दृष्टम्। दशकेभ्यः चन्दमामाकथापठनरतम् अस्मदीयं कुटुम्बम्। न कस्यापि सन्तोषाय उक्तं चाटुवचनमिदम् अपि तु वास्तवम्। यतः सर्वाः कथाः उत्तमाः। उत्तमकथाप्रकाशनार्थं यूयं नूनम् अभिनन्दनीयाः।

***- जी. श्रीनिवास, हैद्राबाद***

**सद्यः** प्रकाशितानां कासाञ्चन चन्दमामा-सञ्चिकानां (बंगालीभाषायाम्) मया सूक्ष्मतया पठनं कृतम्। केचन नूतनाः विभागाः यथा आरब्धाः तथा केचन पुरातनाः निष्कासिताः अपि, यथा चित्रशीर्षिका स्पर्धा। सः विभागः उत्तमः आसीत्। कृपया तेषां पुनःप्रकाशनविषये चिन्तयन्तु। ***- सन्तोषकुमार रॉय, कलकत्ता***

# रजतदीपः

हेमपुरस्य न्यायालये रजतदीपसम्बद्धः कस्यचन अभियोगस्य विचारणा प्रचलति स्म । केशवनामकस्य गृहे रजतदीपस्य चौर्यं प्रवृत्तम् आसीत् । केशवः न्यायाधीशम् अवदत् – ''आर्य ! श्रावणशुक्रवासरे मम पत्नी व्रतस्था सती काश्चन गृहिणीः गृहं प्रति निमन्त्रितवती आसीत् । व्रतसमाप्त्यनन्तरं सर्वासां निर्गमनात् परं तया ज्ञातं यत् गृहे रजतदीपस्य चौर्यं प्रवृत्तम् अस्ति इति । एतत् चौर्यं माधवस्य पत्नी गुणवती एव कृतवती अस्ति'' इति ।

तदा न्यायाधीशः अपृच्छत् – ''माधवस्य पत्नी गुणवती एव एतत् चौर्यं कृतवती इत्यत्र किं प्रमाणम् ?'' इति ।

''सप्ताहात् पूर्वं गुणवत्याः गृहे एकं शुभकार्यम् आसीत् । तदर्थं मम पत्नी तस्याः गृहं गतवती आसीत् । पूजासमये तत्र स्थापितः दीपः मम पत्न्या अभिज्ञातः । कृपया दीपं मह्यं दापयतु'' इति अवदत् केशवः ।

''सः दीपः भवतः एव इत्यत्र किं प्रमाणम् ?'' इति न्यायाधीशः अपृच्छत् ।

''अस्मद्गृहस्य दीपः विशिष्टः अस्ति । तदुपरि 'ॐ' इति लिखितम् अस्ति'' इति उत्तरं दत्तवान् केशवः ।

तदा न्यायाधीशः पुनः अवदत् – ''मम गृहे अपि तादृशः एव दीपः अस्ति खलु !'' इति ।

''तदेव मया अपि वक्तुम् इष्टम् आसीत् । माधवस्य पत्नी मम गृहात् यं दीपं चोरितवती तं भवतः ऌिळ विक्रीतवती इति श्रूयते । अतः सः दीपः इदानीं भवतः गृहे अस्ति'' इति अवदत् केशवः ।

एतत् श्रुत्वा न्यायाधीशः, तत्रत्याः अन्ये च आश्चर्येण स्तब्धाः जाताः ।



# मम स्मृतयः - तेलगु

**य**दा अहं षड्विंशतिवर्षीयः आसं, तदा कार्यवशात् परीक्षणार्थं नैकाः ग्रामसभा गच्छामि स्म। एकदा अहं रेलवे रोदुरनामके स्थाने आसम्। तत्र ग्रामसभाकार्यालयात् नातिदूरं बालकानां कृते पुस्तकालयः आसीत्। सः दिवसः रविवासरः आसीत्। अहं पुस्तकालयम् अगच्छम्। तत्र मया दृष्टं, यत् पञ्चषाः बालाः मासिकपत्रिकासदृशपुस्तकस्य पठने रतं कञ्चन बालकं परितः उपविष्टाः आसन्। 'कदा नु खल्वयम् इदं पुस्तकपठनं समाप्य अस्मभ्यं पुस्तकं ददाति' इति प्रतीक्षमाणाः इव ते बालकाः अदृश्यन्त। ततः लब्धे मासिके क्रमेण तैः तत् पठितम्। सर्वैः तैः समानौत्सुक्येन उत्साहेन च पठनं कृतम्। तेन मम मनस्यपि कुतूहलं जागरितम्। मया तत् पठितुम् उत्थापितम्। सा मासिकपत्रिका आसीत् अस्मत्प्रिया चन्दमामा। यावत् तस्यां वर्तमानाः सर्वाः कथाः अन्ये च अंशाः मया निःशेषं न पठिताः तावत् अहम् आत्मानं पठनात् विरमयितुमपि असमर्थः आसम्। ततः पूर्वं मया अपराणि बालमासिकान्यपि पठितानि आसन्। किन्तु नैषा अतिशयोक्तिः, यत् तानि चन्दमामया सह तुलनामपि नार्हन्ति। तदा अहमपि कथालेखनादिकं करोमि स्म। चन्दमामायां प्रकाशनार्हां कथामहं लिखामि इति इच्छा मदीयमनसि उत्पन्ना। अन्येद्युः मया एका लघुकथा लिखित्वा चन्दमामायां प्रकाशनार्थं प्रेषिता।



Name: Kolar Krishna Iyer
Occ: Retd. District Audit Officer, Tirupati.

तस्मिन् काले चन्दमामायाः सम्पादकाः पत्रं प्रेषयित्वा कथा वा लेखः वा प्रकाशनार्थं स्वीकृतः वा न वेति सूचयन्ति स्म। तथैव सप्ताहाभ्यन्तरे मम कथा स्वीकृताऽस्तीति अहं तैः सूचितः। तद्विषयकं पत्रं दृष्ट्वा यः परमानन्दः अनुभूतः मया, तम् अहं नैव विस्मरामि। इदानीम् अतीतेष्वपि बहुषु वर्षेषु तां घटनां स्मृत्वा रोमहर्षम् अनुभवामि। तस्मादनन्तरं मया चन्दमामायाः कृते सातत्येन कथाः प्रेषिताः। आत्मानं भाग्यवन्तं मन्येऽहं, यतः मम बह्व्यः कथाः प्रकाशनार्थं स्वीकृताः। २०११ तमे वर्षे फेब्रुवारीमासे प्रकाशितां मदीयां 'बङ्गरय्यस्य सम्पत्तिः' इत्येनां पुरातनीं कथां पाठकाः प्रायः स्मरेयुः।

ततः याते महति काले इदानीं मासत्रयादारभ्य मम कथाः चन्दमामायां दृष्ट्वा बहु सन्तुष्टः अस्मि। स्वकथायाः चन्दमाममध्ये प्रकाशनं नाम महद्भाग्यम्। चन्दमामायाः लोकप्रियतायाः बहूनि कारणानि सन्ति।

अहं काश्चन सूचनाः कर्तुमिच्छामि। पुरा चन्दमामायां छायाचित्रानुरूपकाव्यचरणलेखनस्य स्पर्धा प्रकाश्यते स्म। तदेतस्याः महत्त्वपूर्णं प्रसिद्धं च वैशिष्ट्यमासीत्। तस्याः पुनरारम्भः उचितः भवेत्। आकर्षकानि पारितोषिकानि उद्घोष्य कथास्पर्धायाः आयोजनं क्रियताम्। कथालेखनार्थं विषयाः निश्चीयन्ताम्। स्पर्धकेभ्यः उत्तमाः कथाः प्राप्नुयुः भवन्तः। कथा

प्रकाशनार्थं स्वीकृता वा न वेति लेखकान् प्रति सूचयितव्यमेव। सर्वप्रमुखमासिकानि एतत् तत्त्वम् आचरन्ति। एकमपि गृहं चन्दमामां विना न भवतु इत्यनया कामनया सह चन्दमामा पूर्णेन्दुरिव नित्यं तेजःपूर्णा भवतु इति अहम् आशासे।

## मम स्मृतयः - मराठी

अहं षट्सप्ततिः-वर्षीयः अस्मि। पञ्चाशद्वर्षेभ्यः पूर्वं एकषण्णवैकतमे वर्षे माध्यमिकविद्यालयस्य मुख्याध्यापकरूपेण मम नियुक्तिः जाता। तस्मिन् काले पाठशालायाः प्राथमिकविभागे 'चान्दोबा' इत्यभिधा मराठीमासिकपत्रिका प्राप्यते स्म। एतस्य प्रकाशनं चेन्नईतः (मद्रासतः) भवति स्म। तामिळनाडुराज्ये मराठीमासिकस्य प्रकाशनं वैचित्र्यपूर्णमेव। यतः एतद्राज्यं महाराष्ट्रतः बहुदूरं वर्तते। किञ्च तत्र मराठीभाषया न भाष्यते। अहं सातत्येन 'चान्दोबां' पठामि स्म। सर्वाः कथानां चित्राणि चैतन्यपूर्णानि वर्णयुतानि च आसन्।


Name: D.T. Nandapure
Occ: Retd. Principal,
Loni, Maharashtra.

अहं पाठशालायाः पुस्तकालयतः 'चान्दोबां' लभे स्म। सप्ताष्टदिनेषु एव अहं तत् प्रत्यर्पयामि स्म। मह्यं विक्रमवेतालयोः कथाः अतीव रोचन्ते स्म। एतादृशाणां आकर्षककथानां मूलस्रोतः कः इति चिन्तयित्वा नित्यमेव विस्मितः भवामि स्म। अस्मिन् चित्राणां सङ्ग्रहः बहु सम्यग्वर्तते। अत एव अस्मिन् पश्चिमवयस्यपि समानौत्सुक्येन 'चान्दोबां' पठामि। मया प्रेषितः जागतिकसप्ताश्चर्यविषयकः लेखः पुरा मराठीचन्दमामायां प्रकाशितः आसीत्। चन्दमामा ज्ञानवार्ताभिः परिपर्णा इति मम मित्राणामपि मतम्। सत्यमेव सर्वोत्कृष्टम् इदं मासिकम्। अधुना इदं महाराष्ट्रराज्ये मुम्बईनगर्यामेव प्रकाशितं भवति। अतः अधिकं समाधानम् अनुभवामि। 'चान्दोबा' कृते मम हार्दाः शुभाशयाः।

## मम स्मृतयः - तेलगु


Name: Y. Suvarnakala
Hyderabad, A.P.

मम नाम वाय्. सुवर्णकला। अहं षष्ठिवर्षीया अस्मि। शैशवादारभ्य अहं चन्दमामां परिचिनोमि। अद्यापि यदा चन्दमामां मम हस्ते प्राप्नोमि, तदा यावत् पूर्णं पुस्तकं न पठामि, तावत् तां न मुञ्चे। किन्तु मम पठनपद्धतिः विचित्रा वर्तते। अन्तिमपृष्ठतः आरभ्य पठन्ती अहं मुखपृष्ठस्य चित्रेषु विरमामि। मम दशवर्षीयः नप्ता कथाश्रवणाद्विना रात्रौ निद्रां न करोति। प्रतिनक्तं नूतनकथामिच्छति सः। तदा चिन्तयामि, 'किमर्थं प्रतिमासम् एका एव चन्दमामा प्रकाश्यते?' इति!

## विक्रमः वेतालश्च

# विरागस्य वैराग्यम्

दृढनिश्चयः राजा विक्रमः वृक्षं प्रत्यागच्छत्। सः वृक्षात् प्रेतम् अवतार्य स्वस्कन्धे धृत्वा यथापूर्वं मौनेन श्मशानं प्रति गमनमारब्धवान्। ततः प्रेते वसन् पिशाचः अवदत्, "हे राजन्! केचन जनाः धनात्, भोगमयजीवनात् सामाजिकप्रतिष्ठायाश्च नितरां विरक्ताः भवन्ति। किन्तु अन्ततो गत्वा परिशीलयामः चेत्, ते कालेन पूर्वोक्तं सर्वम् अवाप्य अधिकारादिषु रागयुक्ताः सन्तः स्वीयं रिक्थं महता ममत्वेन पालयन्तः तेषां पूर्वतनव्यवहारात् भिन्नम् आचरणं कुर्वन्ति। अहमेकां कथां वच्मि। श्रुणु, श्रुत्वा त्वमेव स्वयं सदसद्विवेकेन आचर!" इति। ततः सः पिशाचः कथाकथनं समारभत।

राजा विचित्रवीरः मालविकाराज्यं धर्मबद्धतया प्रशास्ति स्म। तस्य बहुकालं यावत् सन्ततिः नासीत्। तदर्थं राजदम्पती बहून् यागान् पूजाश्च आचरितवन्तौ। ततः अनुष्ठानेषु यातेषु कतिपयदिवसेषु भाग्यवशात् ईश्वरानुग्रहेण च



महाराणी गर्भवती समभवत्। अचिरादेव सा सुस्वस्थमेकं बालं प्रसूतवती।

तौ राजदम्पती तस्य नवजातशिशोः विरागः इति नाम अकुरुताम् नितरां प्रेम्णा च तम् अपालयताम्। विरागः बाल्यादारभ्यैव सात्त्विकभावान् प्रकटयति स्म। सः एकान्तचिन्तनेनैव महान्तं कालं यापयति स्म। योग्ये वयसि महाराजः तं गुरुकुलं प्रैषयत्। विरागः राज्ञि अपेक्षिताः सर्वाः अपि कलाः समधीतवान्, तथापि सः तासु कास्वपि विशेषासक्तिं न प्रादर्शयत्।

विचित्रवीरः अधुना वृद्धः समभवत्। स्वस्य प्रशासने पूर्ववत् दृढता नास्तीति सः अवागच्छत्। अतः सः राज्याधिकारेभ्यः विरम्य, युवानं स्वपुत्रं विरागं राज्यशकटधुरायां नियोक्तुम् ऐच्छत्।

राजा विचित्रवीरः तस्य चिन्तनम् पुत्राय न्यवेदयत्। तदा ''तात! राजभोगेषु मम आसक्तिर्नास्ति। अहं वनं गत्वा सन्न्यासी भवितुमिच्छामि'' इति स्वाभिप्रायं विरागः प्रकटितवान्।

एतच्छ्रुत्वा राजा चकितः अभवत्। ''वत्स! भवान् राजपुत्रः। राज्यपालनं तव दायित्वं भवति। अरण्यं गत्वा तपस्यां कर्तुं त्वं वृद्धः न सञ्जातः'' इति राजा तस्य समञ्जनं कर्तुं प्रायतत।

किन्तु विरागः राज्याभिषेकं सुतरां न अङ्गीकृतवान्।

राजा विचित्रवीरः बहुकालं यावत् अस्मिन्नेव विषये चिन्तनमकरोत्। तदनु सः पुत्रम् अवोचत्, ''वत्स! यस्य भवितव्यता अस्ति, तत् ध्रुवं भवत्येव। इदानीं तु किञ्चित् कालं यावत् त्वम् अस्मद्राज्ये पर्यटनं कुरु। तत्समाप्त्यनन्तरमपि यदि त्वं राजा भवितुं नेच्छसि, तर्हि तदा यथेच्छं वनं गत्वा तपः आचरितुम् अर्हसि। नाहं त्वाम् अवरुणध्मि।''

विरागः तदुररीकृतवान्। सः वेषान्तरेण सामान्यजनः इव राज्ये पर्यटनार्थं प्रस्थितः।

तदनु आदिवं प्रयाणं कृत्वा सः एकं ग्रामं प्राप्तवान्। तस्यां रात्रौ एकस्य कृषकस्य गृहे अवसत्। कृषिकः तस्य पत्नी च कस्मिन्नपि विषये चिन्ताकुलौ स्तः इति सः अवागच्छत्। तौ उपसृत्य ''युवां चिन्ताकुलौ दृश्येते। कृपया युवयोः चिन्तायाः कारणं किमिति वदतम्'', इति प्रार्थयत्।

तदा कृषिकः प्रत्यवदत्, ''हे युवन्!

सस्यसङ्ग्रहणकाले अकालवृष्ट्या आवयोः कृषिफलं सर्वं नष्टमभवत्। तस्मात् कृष्यर्थं कृतम् ऋणमपि प्रत्यर्पयितुम् असमर्थौ आवां क्रमेण ऋणे ऋणार्णे च ग्रस्तौ अभवाव। आवयोः क्लेशान् राज्ञे निवेदयितुं राजास्थानं गतवन्तौ आस्व। किन्तु मध्ये अधिकारिणः राज्ञा सह अस्माकं मेलनं नान्वमन्यन्त।''

विरागः किञ्चिदालोच्य अवदत्, ''मम चिरकालमित्रं राज्ञा सह मेलितुं मां सहकरोति। अहं राजानं मिलित्वा युवयोः कष्टानि विनिवेदयामि। चिन्तां मा कुरुतम्'' इति। कृषकः तत्पत्नी च तस्य वचनेन आश्वासितौ, शान्त्या स्मितमुखौ सञ्जातौ। ''राज्ञः समीपे एतद्विषयं प्रस्तोतुं मा विस्मर'' इति तौ विरागं प्रार्थितवन्तौ। यदा निशा अतीता, तदा सामान्यवेषधारी विरागः तौ प्रति कृतज्ञतां प्रकटय्य पुनः प्रवासमारब्धवान्।

कतिचनदिनानन्तरं विरागः कस्यचित् यज्ञनारायणनामकस्य ब्राह्मणस्य गृहं गतः। तत्र सः ब्राह्मणः पदे पदे तस्य पत्नीं सान्त्वयति स्म। जिज्ञासुः विरागः तमुपेत्य 'का समस्या बाधते युवाम्?' इत्यपृच्छत्।

तदा ब्राह्मणः न्यवेदयत्, ''महोदय! अहं महता कष्टेन दशसहस्ररूप्यकाणि मम पुत्र्याः विवाहार्थं रक्षितवान्। सप्ताहात् पूर्वं केचन चोराः मम गृहं प्रविश्य तद्धनं चोरितवन्तः। अधुना अस्माकं पुत्र्याः विवाहं वयं कथं कर्तुं शक्नुमः इति मम पत्नी चिन्ताक्रान्ता वर्तते'' इति।

अनया वार्तया सम्भ्रान्त इव विरागः ब्राह्मणम् अपृच्छत्, ''युवां स्थानिकाधिकारिणे चौर्यविषये न असूचयतं किम्?'' इति।

तदा यज्ञनारायणः स्वचिन्ताम् अकथयत्, ''कालः विषमः प्राप्तः भोः! मम समस्यां परिहर्तुं स्थानीयाधिकारिणे मया





उत्कोचः प्रदेयः। तस्मै उत्कोचं प्रदातुं मम समीपे तावदपि धनं नास्ति अधुना। किं कर्तव्यम् इति अज्ञात्वा चिन्ताकुलौ आस्व आवाम्'' इति।

''आर्य! अहं तव अवगतवान् अवगतवान्। यदि मम समीपे भूरिधनम् अभविष्यत् चेत् तव आपदं निवारयितुम् अशक्ष्यम्। परन्तु मम समीपे किञ्चिदेव धनमस्ति। त्वम् एतत् स्वीकुरु। न्यूनातिन्यूनम् अनेन तव समस्यां स्थानिकाधिकारी पञ्जीकृतां कुर्यात्'' इत्युक्त्वा नाणकयुक्तं लघुस्यूतमेकं तस्मै प्रायच्छत् विरागः। विरागस्य सहानुभूतिपूर्णवचनानि श्रुत्वा नितरां तुष्टः ब्राह्मणः तस्मात् धनस्वीकरणं नाङ्गीकृतवान्। परन्तु विरागः सानुनयं बलादेव धनं ब्राह्मणस्य हस्ते संस्थाप्य अवदत्, ''राजास्थाने केषाञ्चनपरिचयः वर्तते मम। अवश्यमेव अहं तव समस्यां राज्ञे निवेदयिष्यामि।'' तदा ब्राह्मणः सन्तोषेण विरागाय धन्यवादं व्याहरत्।

ततः परं कतिचन दिनानि एवमेव पर्यट्य विरागः एकं सन्यासिनम् अमिलत्। स च साधुः एकस्य वृक्षस्य अधः उपविश्य कतिचनजनान् उपदिशति स्म। विरागः तैः सह उपविश्य तस्य उपदेशं सश्रद्धं श्रुतवान्। अन्ते सर्वेषां गमनपर्यन्तं प्रतीक्ष्य साधुम् उपगम्य तमेवमपृच्छत्, ''स्वामिन्! अहं मन्ये, यत् सन्यासाश्रमस्वीकरणात् परं भवान् अतीवसन्तुष्टः अस्ति अधुना'' इति।

''सत्यमेव भोः! संसारभारस्य परित्यागेन अधुना अहम् अतीवसन्तुष्टः अस्मि'' इति सस्मितम् उक्त्वा साधुः विरागस्य वचनानि अङ्गीकृतवान्। तत्पश्चात् विरागः इतोऽपि कश्चित् कालं यावत् साधुना सह वार्तालापं कृतवान्। ततश्च स्वमार्गे असाधयत्।

एवमेव सः पर्यटन् मार्गे एकत्र एकं लघु कुटीरं अपश्यत्। तत्र कश्चन प्रौढः पुरुषः दशबालेभ्यः भोजनं परिवेषयन् दृष्टः विरागेण।

विरागः तावत् बृहत्कुटुम्बं पोषयन्तं तं दृष्ट्वा चकितः अभवत्। तं उपगम्य अपृच्छत्, ''इमे बालाः तव पुत्राः खलु? तव बृहत्कुटुम्बम् इव भासते। तव नाम किम्?''

''महोदय! मम नाम दयानन्दः। एतेषु द्वावेव मम पुत्रौ। अन्ये सर्वेऽपि अनाथाः। यथाशक्ति अहं एतान् पालयामि मम

स्तरानुसारम्। अतः एतैः सह मम कुटुम्बं तु बृहदेव'' इति सानन्दं विरजमुक्तवान् सः पुरुषः।

तदा विरागः अपृच्छत्, ''अधुना तव पुत्रयोः पोषणमेव महत्कष्टसाध्यम्। पुनः तत्र एतेषाम् अनाथानां पोषणेन तव अधिकः भारः न भवति किम्?''

दयानन्दः तमेवं समाधत्तवान्, ''महोदय! मामकानां पोषणं ममोत्तरदायित्त्वमेव। कथं उत्तरदायित्त्वं भारः भवेत्? तत्र मम महान् सन्तोषः अस्ति। स्वागतं भवतेऽपि! भवानपि अत्रागत्य अस्माभिः सह भोजनं स्वीकरोतु'' इति दयानन्दः विरागं न्यमन्त्रयत्। विरागः क्षणमेकं विचिन्त्य तम् उपगम्य ''भद्र! सार्थकं ते जीवनम्!'' इत्युक्त्वा तस्य निमन्त्रणम् अङ्गीकृत्य तैः सह उपविश्य सानन्दं भुक्तवान्। तैः बालैः सह किञ्चित् कालं क्रीडित्वा, दयानन्देन सह कश्चित्कालं यावत् प्रजल्प्य ततः स्वमार्गे निरगच्छत् विरागः। ततः सः कुत्रापि अविरम्य साक्षात् राजभवनम् अगच्छत्।

विरागः स्वपितरं राजानं विचित्रवीरं तस्य वैयक्तिकप्रकोष्ठे मिलित्वा ''अहं राजसिंहासनमारोढुं सिद्धोऽस्मि'' इति स्वाङ्गीकारं प्राकटयत्।

अपेक्षितपरिणामसिद्ध्या प्रमुदितः विचित्रवीरः मन्दं स्मयमानः स्वपुत्रं विरागं वीक्ष्य ''शुभं भूयात्'' इत्याशीर्वचांसि उदचारयत्।



विरागः राजपदं समारुह्य प्रथमं दुष्टाधिकारिणां नियन्त्रणस्य विषये मतिम् अकरोत्। ये च उत्कोचं स्वीकुर्वन्ति स्म, तान् सः निर्घृणतया दण्डितवान्। ततः परं चौरान् गृहीत्वा तान कारागारे बद्धवान्। अपि च योग्यप्रभुः भूत्वा प्रजाभ्यः सामान्यकरं सङ्गृहीतवान्। विरागस्य सत्तायां अवन्तिकाराज्यं प्रगतिमार्गे प्राचलत्।

कथाम् एतामुक्त्वा वेतालः अपृच्छत्, ''अयि राजन्! बाल्यादपि विरागः दार्शनिकभावैः सह एव समैधत। सः राज्याभिषेकं प्रति तिरस्कारमपि प्राकटयत्। किन्तु अकस्मात् राजा भवितुं तस्य मनसि परिवर्तनम् आगतं तस्य कारणं किम्? किं सः तेन प्राप्यमाणं राज्याधिकारं नूतनदृष्ट्या अपश्यत्? सः राजाधिकारः वैराग्यबाधकः भोगेच्छायुक्तः इति अचिन्तयत्। किमिदानीं

राज्याधिकारः न गर्ह्यः इति सः अचिन्तयत्? अथवा सः सुखे, सम्पत्तौ, प्रभुत्वे च अनुरक्तः अभवत्? श्रमकारकदीर्घपर्यटनेन, नैकेषां कष्टमयगाथाश्च श्रुत्वा सः तद्भाग्ये विहितं सुखोपभोगम् आस्वादयितुं स्वमनः अकरोत् किम्? के राजन्! यदि त्वं मम प्रश्नानाम् उत्तराणि जानासि, तर्हि उत्तर! यदि ज्ञात्वापि न वदसि, तर्हि तव शिरः सहस्रखण्डेषु भग्नं भविष्यति!''

राजा विक्रमः प्रत्युत्तरम् एवमदात्, ''वेताल! विरागः आदौ राज्यपदवीं भोगमयीम् अमन्यत। परं पर्यटनानन्तरं राज्ञः जीवनं नाम सुखोपभोगार्थं न, अपि तु प्रजानां समस्यानां निवारणार्थमिति सः अभिज्ञातवान्। राजा उत्तमप्रशासकत्वेन सर्वदा स्वप्रशासने कार्यरतानाम् अधिकारिणां निरीक्षणं कुर्यात्। उत्कोचग्राहिणां दण्डनं तस्य कर्तव्यं भवति। चोराणां निग्रहणं तस्य कार्यम्। तेन राज्ये सर्वाः प्रजाः नित्यजीवनापेक्षाः प्राप्स्यन्ति न वा इति सर्वदा परिशीलनीयम्। शत्रुभ्यः राज्यस्य संरक्षणं तस्य कर्तव्यम्। कुटुम्बस्य पोषकस्य पितुः स्थानं भवति राज्ञः। विरागेण इदं सर्वम् अनुभूतम्। अपि च साधुः संसारोत्तरदायित्वं भारत्वेन अगणयत् इति तेन दृष्टम्। परं समानस्थितौ कश्चन सामान्यः अनाथबालानां पोषणमुत्तरदायित्वेन अगणयत्। कस्यस्वित्सामान्यस्य आत्मनः उत्तरदायित्वं प्रति जागरूकताम् अवलोक्य राज्ञः स्वप्रजानां पोषणदायित्वस्य माहात्म्यं सः अजानात्। इदं सर्वं ज्ञात्वैव विरागः राजसिंहासनम् आरोढुं निश्चयमकरोत्। नैराश्यं येनानुभूतं, तस्यैव शान्तिं जनयति वैराग्यम्। कश्चन उत्तरदायित्वं यदि गृह्णाति, तदेव तस्य सन्तृप्तिं जनयति। विरागः राजोपाधिग्रहणस्य राजोत्तरदायित्वस्य च भेदं अभिज्ञातवान्। अत एव सः सिंहासनमारोढुं संसिद्धः अभवत्।''

इत्थं यदा राज्ञः विक्रमस्य मौनभङ्गः अभवत्, तदैव वेतालः प्रेतेन सह अन्तर्हितः पुनः वृक्षम् आरूढवान्।

*- एन्. शिवनागेश्वरराव:*





# स्तुत्यर्हं कर्म

श्रीनिवासः मोहनः च भ्रातरौ। श्रीनिवासः चतुर्दशवर्षीयः मोहनश्च नववर्षीयः। किशोरावस्थां प्राप्तवान् श्रीनिवासः शान्तस्वभावः संयमी चासीत्। किन्तु बालः मोहनः चञ्चलः कुतूहली च। सः सर्वदा तादृशं किमपि करोति स्म, यस्य परिणामः क्लेशजनकः भवति स्म। कदचित् यथाप्राप्तं तौ ग्रीष्मावकाशे पितामहस्य गृहे निवासार्थम् आगतौ। प्रायः तौ दूरदर्शनं दृष्ट्वा एव समयं यापयतः स्म। एकस्मिन् दिवसे पितामहः तौ उक्तवान्, ''आदिनं दूरदर्शनम् एव पश्यथः युवाम् । तदपेक्षया गृहे किमपि उपयुक्तं कार्यं कुरुतम्।''

अन्येद्युः मोहनः प्रातः शीघ्रम् उदतिष्ठत्। अग्रजम् अदृष्ट्वा सः तं सर्वत्र अमृगयत्। श्रीनिवासः मोहनात् प्राक् उत्थाय उद्यानकर्मणि रतः आसीत्। तम् उद्याने दृष्ट्वा मोहनेन चिन्तितम्, ''पितामहं मोदयितुं श्रीनिवासः श्रमपूर्णं स्तुत्यर्हं कर्म करोति। मया अपि किमपि कर्तव्यम्'' इति।

पितामहस्य प्रकोष्ठे तेन बहूनि पुरातनानि वार्तापत्राणि, मासिकानि पुस्तकानि च लब्धानि। मोहनः तानि एकत्रीकृत्य समाहृतवान्। तं गुच्छम् ऊढ्वा सः पुणय्यस्य आपणं गतवान् तत् सर्वं विक्रीतवान् च।

सायङ्काले पितामहः प्रत्यागच्छत्। उद्याने नूतनतया खनिताः जलप्रणालयः अवलोक्य सः विस्मितः जातः। श्रीनिवासस्य कार्येण प्रीतः पितामहः तं प्राशंसत्। श्रीनिवासः अपि स्तुत्या प्रसन्नः अभवत्।

तदा पितामही तत्र आगता । सा मोहनं प्रति निर्दिश्य पितामहम् अवदत्, ''मोहनः अपि अद्य भूरि श्रमं कृतवान्। जानाति वा भवान्? सः पुरातनानि वृत्तपत्राणि विक्रीय

एम्. आनन्दरावः



शतरूप्यकाणि लब्धवान्।''

तत् श्रुत्वा मुदितेन पितामहेन उक्तम्, ''उत्तमम्। कुत: लब्धानि तानि?'' मोहन: प्रत्यवदत्, ''भवत: प्रकोष्ठादेव'' इति। तस्य उत्तरेण उपहत: इव पितामह: ''हा धिक्! हा हन्त! मया कियता कृच्छ्रेण तानि संगृहीतानि'' इति उक्त्वा सपदि स्वप्रकोष्ठम् प्रति अत्वरत। पुस्तकानि तत्र न सन्ति इति वीक्ष्य प्रकुपित: स: तानि प्रत्यवाप्तुं तं पुरातनवस्तूनां व्यापारिणं प्रति अधावत्। तेन मोहन: अतीव खिन्नः अभवत्।

रात्रि: जाता। तस्मिन्नेव ग्रामे निवसन् मोहनश्रीनिवासयो: पितृव्य: गृहमागत:। सर्वे ज्येष्ठा: आम्रवृक्षस्य अध: उपविश्य वार्तालापम् अकुर्वन्। ज्येष्ठजनानां संवादे अनासक्त: मोहन: अस्वस्थ: भूत्वा उपद्रवान् आरभत।

पितामही तं लघुचपेटेन निर्भित्सितवती। सर्वे तस्य चाञ्चल्यम् उपासहन्। तर्जनेन व्यथित: मोहन: रोदनं कृतवान्। रात्रौ भोजनसमये अपि स: रोदनात् न व्यरमत्।

रात्रौ अष्टवादने पितृव्य: गृहमगच्छत्। तदा मोहन: गृहे कुत्रापि न दृष्ट:। तम् अन्वेष्टुं पितामह: श्रीनिवास: च गृहात् बहि: गतवन्तौ। मोहनं विना प्रत्यागच्छन्तौ तौ दृष्ट्वा पितामह्या: नयनाभ्यां सहसा अश्रुधारा नि:सृता।

तदा श्रीनिवासेन भूमौ चाकलेहस्य आवरणं लक्षितम्। स: अवदत्, ''पितामहि! मम गमनात् अनन्तरं मोहन: ध्रुवम् अत्र आगत:। यत: तदा एतत् चाकलेहस्य आवरणं नासीत् अत्र।'' तत्क्षणे एव पितामह: अपि तत्र आगत:। उपरितन-अट्टभूमिं गच्छन्ती रज्जुश्रेणी अपि स्थानभ्रष्टा इति श्रीनिवासेन अवलोकितम्। ''पितामह, ध्रुवं स: अट्टभूमौ अस्ति'', इति स: अवदत्।

तौ मोहनम् उच्चै: आह्वयताम्। परं तस्य प्रत्युत्तरं न श्रुतम्। तत: श्रीनिवास: उत्पीठिकाम् आकृष्य अट्टभूमे: अध: अस्थापयत्। तस्या: उपरि लघुपीठं निधाय स: लघुपीठम् आरोहत्। तस्य उपरि पादाङ्गुलिषु स्थित्वा स: अपश्यत्, यत् मोहन: अट्टभूमौ गाढं सुप्त: आसीत्।

तदनन्तरं श्रीनिवासः एकं दर्पणं कौशलेन हस्ते धृत्वा मोहनस्य प्रतिबिम्बं पितामह्यै प्रादर्शयत्। "पुरा किल ग्रीकदेशीयाः दर्पणं निभृतं कौशलपूर्वकं च संस्थाप्य अध्वनि गच्छतः जनान् अवलोकन्ते स्म। एतस्मिन् विषये मया शालायाः ग्रन्थालये पठितम्।" इति श्रीनिवासस्य वचनानि श्रुत्वा निश्चिन्ताः सर्वे हसितवन्तः।

निद्रारतः मोहनः न प्रबोद्धव्यः इति पितामहेन सूचितम्, यतः अट्टभूमिः विस्तृता सुरक्षिता चासीत्, तेन 'मोहनः लुठित्वा अधः पतेत्' इति भयं नासीत्। परन्तु सुरक्षार्थं तैः तं परितः उपाधानानि स्थापितानि, निद्रार्थं स्वशय्या च समारूढाः।

मध्यरात्रौ द्वौ चौरौ गृहं प्रविष्टौ। पितामह्याः आक्रोशेन मोहनः जागरितः। अधः एकः स्तेनः पितामह्याः कण्ठे वर्तमानां स्वर्णमालां ग्रहीतुं प्रयतमानः तेन दृष्टः। अन्येन चोरेण पितामहस्य कण्ठे बलात् छुरिका धृता आसीत्। श्रीनिवासः तस्य पादं धृत्वा तं पातयितुं प्रायतत। मोहनेन तत्क्षणमेव स्थितिः विज्ञाता। अट्टभूमौ स्थापितम् अवलेहपात्रं गृहीत्वा तत् अधः क्षिप्तम्। तत् सरलं स्वर्णमालाम् अपहरतः चोरस्य शिरसि पतितम्। खल्वाटः सः चोरः पात्रस्य प्रहारेण जातया पीडया आक्रोशं कृत्वा तत्रैव अधः पतितवान्। यथावसरं पितामहः श्रीनिवासः च द्वितीयं चोरं गृहीतवन्तौ । तदा मोहनः अट्टभूमितः अवरुह्य द्वितीयस्य स्तेनस्य जङ्घापिण्डं दष्टवान्। सत्वरं गृहात् बहिः धावित्वा साहाय्यार्थम् उच्चैः आक्रोश्य प्रतिवेशिनः च प्रबोधितवान्। सर्वे आगत्य चौरद्वयं बन्दीग्राहं गृहीत्वा आरक्षकस्थानं नीतवन्तः। तेषु गतेषु गृहे सर्वैः प्रत्युत्पन्नमतिः मोहनः प्रशंसितः तस्य स्तुत्यर्हकर्मकारणात्। पितामहेन पितामह्या च सः प्रेम्णा आश्लिष्टः। इदानीं मोहनः अतीव सन्तुष्टः सगर्वं प्रफुल्लवदनश्च जातः।





# मानसिकदास्यम्

एकदा त्रिनाथनामकः साधुरेकः स्वान्तेवासिभिः सह देशाटनं करोति स्म। सः मध्येमार्गम् एकं ग्रामं प्राविशत्। गुरुः तस्य शिष्याश्च रात्रौ तत्र उषितुं व्यवस्थां अन्विषन्तः आश्चर्यकरीं घटनामपश्यन्।

कश्चन कृशः पुरुषः एकस्मिन् वृक्षे बद्धः आसीत्। अपरः उन्नतः दृढकायः तं मारयति स्म। कृशकायस्य पत्नी, तथा च तस्य षड्वर्षीयपुत्रश्च दृढकायस्य पादौ गृहीत्वा तं कृशकायं मोक्तुं प्रार्थयेते स्म। महान् जनसमूहः परितः सम्भूतः आसीत्।

सौशील्यनामकः शिष्यः विचार्य ज्ञातवान्, यत् तत्र दृढकायस्य नाम भुजङ्गः इत्यासीत्। प्रतिवेशिग्रामेषु स एव सुसम्पन्नः। तथैव वृक्षे बद्धः पुरुषः वीरय्यः। सः तस्य परिवारश्च भुजङ्गस्य अहर्निशं सेवां करोति स्म, यतो हि बहु कालात्पूर्वं वीरय्यस्य पूर्वजाः भुजङ्गस्य पूर्वजेभ्यः ऋणं स्वीकृतवन्तः। ते दातव्ये समये तत् ऋणं दातुं न शक्ताः। ततः आरभ्य तत्पुत्राः, पौत्राः प्रपौत्राश्च परिवारेण सह ऋणपरिहारार्थं भुजङ्गस्य परिवाराय दासाः अभवन्। परिवारे सर्वोऽपि जनः तत्र कार्यं करोति स्म, तेषां बालाः अपि दासत्वं भजन्ते स्म।

वीरय्यस्य ज्येष्ठपुत्रः सूर्यः अतीव बुद्धिमान्। सः भुजङ्गस्य गोकुलं रक्षति स्म। शनैः शनैः प्रापञ्चिकविषयेष्वपि सः अवधानं ददाति। एकस्मिन् दिने सः भुजङ्गमपृच्छत् "मम पूर्वजाः त्वत्तः कियत् ऋणं स्वीकृतवन्तः? तेषां काले ते कियत् प्रत्यर्पयन्? मम पित्रा दातव्यत्वेन कियत् ऋणमवशिष्टम्? वयं सर्वे भवतः क्षेत्रे कार्यं कुर्वन्तः स्मः। अस्माकं वेतनानि भवान् कथं गणयति? तदृणं पूरयितुं कति वर्षाणि अस्माभिः कार्यं करणीयम्" इति।

दासरि वेंकटरमणः

भुजङ्गः एतादृशं प्रश्नप्रवाहं श्रुत्वा चकितः अभवत्। कश्चित् तमेवं पृच्छतीति सः न कदाप्यचिन्तयत्। ''मामेवं प्रष्टुं कियत् धैर्यं तव!'' इति वदन् सः सूर्यं ताडितवान्।

दीनः सूर्यः उत्तमां जीविकामन्वेष्टुं गृहं त्यक्त्वा ततः निर्गतः। इदानीं भुजङ्गः ''तव पुत्रः सूर्यः कार्यं त्यक्त्वा नगरं प्रति पलायितः। तं त्वं नगरात् प्रत्यानय'' इति वदन् वीरय्यस्य अत्यन्तं पीडनम् आरभत।

साधुः तस्य शिष्याश्च वीरय्यस्य दयनीयस्थितिं दृष्ट्वा कम्पितहृदयाः समभवन्।

सौशील्यः जनसमूहे सम्मिलितः सन् उच्चैराक्रोशत्, ''एतदन्याय्यम्। वीरय्येन कियत् दातव्यमिति प्रथममस्मद् पुरतः उद्घोषय!'' इति। तच्छ्रुत्वा जनसमूहे कलकलः सञ्जातः। किञ्चित्कालानन्तरं जनाः सर्वे शनैः शनैः ऐकमत्येन सौशील्यप्रदर्शिताम् इच्छां दृढं प्राकटयन्।

साधुः त्रिनाथः अपि गम्भीरेण स्वरेण भुजङ्गाय अवोचत्, ''भवता अधुनैव अवश्यं वक्तव्यम्'' इति।

भुजङ्गः आपादतलमस्तकं त्रिनाथं पश्यन् उपहासेन अपृच्छत्'' किमर्थम्? भवान् ददाति वा?'' इति।

''तेन ज्ञातेन अज्ञातेन वा भवतः किं प्रयोजनम्? वीरय्येणतेन कियद्दातव्यमिति वदतु अथवा वीरय्यस्य परिवारं ऋणात् पूर्णतया मोचयतु'' इति त्रिनाथः समाधत्तवान्। भुजङ्गः सङ्कटस्थितौ



अपतत्। सः त्रिनाथस्य शासनानुरूपध्वनिं श्रुत्वा सम्भ्रान्तः अभवत्। अतः सः अविचार्यैव बुद्धौ स्फुरितां काञ्चिदनियतसङ्ख्यां सर्वेषां पुरतः अवदत्।

त्रिनाथः साक्षात् भुजङ्गं पश्यन् ''अस्मिन् विषये प्रमाणभूतानि पत्राणि कान्यपि दर्शयितुं शक्नोति भवान्?'' इत्यपृच्छत्।

प्रकुप्तः भुजङ्गः अवदत्, ''वीरय्यस्य पूर्वजाः मत्पूर्वजेभ्यः ऋणं स्वीकृतवन्तः। नैदानीन्तनी घटना इयम्। वीरय्यं पृच्छन्तु, सः स्वयं ऋणी नास्तीति वदति वा इति?

सर्वे उत्तरापेक्षया वीरय्यमपश्यन्। वीरय्यः अवनतशिरः समभवत्। त्रिनाथेन उत्तरयितुम् आग्रहे कृते सति वीरय्यः नेत्राभ्याम् अश्रूणि मोचयन् अवदत्, ''भोः! किमहं वदामि?



त्रिनाथः जनानुद्दिश्य इत्थमवदत्, "वीरय्यस्य कुटुम्बिनः सर्वेऽपि तेषां पूर्वजानां वचनानुसारं भुजङ्गस्य परिवारास्य दास्यमकुर्वन्। ते सर्वे अत्यन्तदीनस्थितिम् अनुभूतवन्तः तथा अपमाननादिकं च सोढवन्तः केवलं पूर्वजानां वचसः कारणात्। स्वातन्त्र्येण विना जीवनं शवतुल्यं निर्जीवमेव भवति। अत एव अहमेतमाभरणं तस्मै दत्तवान्। यच्च आभरणं देशस्यास्य महाराजः स्वयं ममाङ्गुल्यां अलङ्कृतवान्" इति। तदनु भुजङ्गमुद्दिश्य साग्रहं अवदत्, "एतदङ्गुलीयकं सुवर्णेन निर्मितं, तथैव नैकानि रत्नानि वज्राणि च तत्र निहितानि वर्तन्ते। अस्याभरणस्य मूल्यं साक्षादहं वक्तुमसमर्थः। किन्तु एतत्तु अवश्यं जानामि, यदेतस्य विक्रयणेन प्राप्तेन धनेन भवादृशान् शतजनानहं क्रेतुं समर्थः। यावत् भवान् वीरय्यस्य ऋणमोचनं नाङ्गीकरोति, तावत् मच्छिष्यैः सह अहमत्रैव उपविशामि" इति।

मम पितामहः मम पित्रे अकथयत्, यत् वयं तेषां कुटुम्बस्य ऋणिनः स्मः इति। तदा मम पिता अपि मह्यं तदेव अकथयत्। अस्माभिः कियत् दातव्यमिति अहं कदापि न पृष्टवान्। तथा प्रष्टव्यमिति विचारोऽपि नासीत्। सोऽपि मह्यं कदापि किमपि नावदत्।

त्रिनाथः तत्रैव उपविश्य भुजङ्गमवलोकयामास। सः दक्षिणहस्तस्य अङ्गुल्यां धृतं अङ्गुलीयकं निष्कास्य भुजङ्गाय दत्त्वा प्रार्थितवान्, "कृपया तैः देयस्य ऋणस्य निमित्तं एतत्स्वीकृत्य वीरय्यस्य परिवारं ऋणान्मोचयतु" इति।

भुजङ्गः तदङ्गुलीयकं स्वीकृत्य सम्यक् परीक्ष्य अवोचत्, "एतस्य स्वीकरणेनापि ऋणशेषः इतोप्यवशिष्टः।"

एतच्छ्रुत्वा भुजङ्गः नितरां भीतः अभवत्। धृताभरणहस्तः मन्दं मन्दं कम्पते स्म। अत एव सः मुहूर्तमप्यविलम्ब्य अवदत्, "वीरय्यः ऋणान्मुक्तः। कृपया आभरणमिदं भवता सहैव भवतु" इति एवमुक्त्वा अङ्गुलीयकं त्रिनाथाय प्रत्यर्प्य सः ततः निर्गतः।

साधुः त्रिनाथः वीरय्यस्य परिवारं समीपमाहूय अवदत्, "नगरगमनानन्तरं राजभटानां साहाय्येन अहं भवतः पुत्रं सूर्यमन्वेषयामि" ततः सशिष्यपरिवारं

प्रातिष्ठत।

सौशील्यस्तु ततः निर्गतोऽपि तस्मिन्नेव विषये नितरामालोचयति स्म। 'एतावदवमानं सहमानाः एते वीरय्यकुटुम्बिनः किमर्थं कदापि विरोधं न कृतवन्तः। तेषामन्वये बहवः पर्याया अप्यतीताः, एतावति काले तस्य ऋणस्य कथा अपि कालोदरे निमग्ना अभवत्। तथापि केन बलेन ते आत्मानम् ऋणग्रस्तान् अमन्यनत? केन च ते दासत्वं प्रापिताः' इति। अनन्तरदिनस्य मध्याह्नकाले नदीतीरे यदा ते विश्रान्त्यर्थं स्थिताः, तदा सौशील्यः तस्य सन्देहान् त्रिनाथस्य सम्मुखे प्रस्तुतवान्। साधुः त्रिनाथः स्मितमुखः समीपस्थे वृक्षे बद्धं गजमेकमदर्शयत् शिष्यमपृच्छत्, ''तत्र भवता किं दृश्यते?'' शिष्यः उक्तवान् ''गजः'' इति। त्रिनाथः पुनरेवमवोचत् ''तं परीक्षया पश्य, तस्मिन् त्वं किमपि विशेषं आश्चर्यास्पदं ज्ञानं प्राप्स्यसि। वद किं तत्?'' सौशील्यः कश्चित्कालं यावत् जागरूकतया अवलोकितवान्, तदा सः तस्य गुरुवचनानि अवगतवान्। महान् गजः तस्मिन् वृक्षे अत्यल्पेन बन्धेन बद्धः अस्ति। यदि गजः प्रयत्नेन आकर्षति, तर्हि तत्क्षणमेव सः बन्धमुक्तः शिथिलीभवति।

साधुः त्रिनाथः शिष्यस्य मनः ज्ञात्वा तं प्रति इत्थम् अबोधयत्, '' वत्स! यदा गजः बालः आसीत्, तदा सः बन्धात् मोक्षं प्राप्तुं बहुधा प्रायतत। किन्तु तदा सः न शक्तवान्। इदानीं वर्धितोऽपि सः बन्धमोक्षाय क्रियमाणः प्रयासः वृथेत्येव मन्यते। वीरय्यस्य पूर्वजानां ऋणस्वीकारः तेन च तेषु आपतितं दास्यमपि अस्य गजस्य बन्धनवदेव वर्तते। अनेन ऋणव्यवहारेण वीरय्यपूर्वजाः मानसिकबन्धने निबद्धाः अभवन्। गजः सामान्यः बुद्धिहीनः जन्तुः, तस्मादेव सः बन्धनं त्रोटयितुं न प्रयतते। किन्तु सूर्यसदृशः जनः भुजङ्गसदृशक्रूरस्य मानसिकदास्यशृङ्खलातः वीरय्यसदृशानां विमोचनार्थं यतते। सौशील्यः गुरुवचनेषु आन्तर्यं ज्ञात्वा तं प्राणमत्।





# पञ्चतन्त्रकथा

हिरण्यक: लघुपतनकं स्पष्टमेव अवोचत् यत्, ''आवयो: मैत्री अशक्या एव वर्तते'' इति।

ततः लघुपतनक: काक: तमुवाच, ''त्वं चित्रग्रीवं तथा तस्य अनुचरान् जालात् अमोचय:। तत् दृष्ट्वा प्रसन्नचित्त: अहं तव सौहार्दं सम्पादयितुम् अत्र उपस्थितोऽस्मि'' इति।

''त्वं मे भक्षक: अहं च ते भक्ष्य: अस्मि। एवं स्थिते आवयो: मैत्री कुत: शक्यते? मित्रतायै शत्रुतायै च जन्मन: सम्पद: च समस्तर: आवश्यक:। किन्तु यदि द्वयो: अन्यतर: धनवान्, अपरश्च दुर्बल: स्यात्, तर्हि मित्रता न शक्या। अत: शीघ्रमेव प्रतिगम्यताम् इत:'' हिरण्यक: प्रत्युवाच।

''यदि त्वं तव बिलात् बहिर्नायासि, तर्हि अत्रैव तव बिलस्य द्वारि एव स्थित्वा अनशनेन प्राणत्यागं करिष्ये। त्वं च ब्रह्महत्यापातकी भविष्यसि'', लघुपतनक: आत्मन: दृढनिश्चयम् अश्रावयत्।

''किदृशानि अस्वाभाविकानि वचांसि वर्तन्ते तव! अहं मम स्वाभाविकशत्रुणा सह कथं वा मित्रतां प्रदर्शयामि? किं त्वया वृद्धानाम् अनुभविनां च वचनानि न कदापि श्रुतानि, यत् रिपु: अनुनयं वा कुर्यात्, प्रार्थनां वा कुर्यात्, कदाचित् तु समभावम् अपि प्रदर्शयेत् स:। किन्तु तेन सह मैत्री न कदापि कार्या। जलम् अत्युष्णं वा भवतु, गुणे साम्यं सत्यपि अग्निं न निर्वापयति वा तद्?'' हिरण्यक: अब्रवीत्।

''एवं सति तव वचनानि अपि स्वाभविकानि कथं वा भवितुम् अर्हन्ति? त्वं मम मुखावलोकनात् पूर्वम् एव मां स्वस्य अरिं कथं वा मन्यसे?'' लघुपतनक: पृष्टवान्।

मित्रसम्प्राप्ति: - ३

"शत्रूणां प्रकारद्वयम्। केचन जात्या एव शत्रुभावं वहन्ति। अन्ये च केचन विशिष्टकारणेभ्य: शत्रव: जायन्ते। त्वं मम जन्मारि: असि। जीवननिर्वहणे यदि केभ्यश्चित् कारणेभ्य: भेद: उत्पद्येत, तर्हि स: चातुर्येण दूरीकर्तुं शक्य:। किन्तु जात्या उत्पन्ना शत्रुता तु द्वयो: एकस्य मृत्युना एव समाप्तिं याति", हिरण्यक: अगदत्।

वायस: पृष्टवान् "कृपया शत्रुताया: एतयो: प्रकारयो: भेद: कथम् अवगन्तव्य: इति कथय" इति।

तदा मूषक: उदतरत्, "सम्पर्केण जातस्य शत्रुत्वस्य किमपि विशिष्टं कारणम् अवश्यं भवति। तस्मिन् कारणे नष्टे सति शत्रुत्वम् अपि अपगच्छति। सर्पनकुलं, शाकाहारी पशु: मांसाहारी पशु: च, जलम् अग्निश्च, सधन: निर्धनश्च, सिंह: गज: च, व्याध: मृगश्च, दार्शनिक: तथा च नास्तिक:, विवेकी मूर्खश्च, शीलवती स्त्री अथ च दुराचारिणी, सज्जन: दुष्ट: च, देवा: राक्षसा: च इत्यादिषु विद्यमाना शत्रुता स्वाभाविकी वर्तते। एतयो: वर्गयो: एकोऽपि गण: द्वितीयं गणं समूलं नाशयितुं न शक्नोति। किन्तु तथापि तयो: गणयो: संघर्ष: सदैव प्रचलन्नेव भवति। प्रत्येकं गणस्य सा एकैव व्यथा, यत् अन्यस्य गणस्य समूलं नाश: न जात:। एतादृशं शत्रुत्वं न किमपि परिणामं साधयितुं शक्नोति" इति।



"एतादृशी शत्रुता तु अनर्थकारिणी एव। विवेकिना मानुषेण तु सदैव नूतनतया मित्रसङ्ग्रह: कर्तव्य:। पुरातनी शत्रुता विस्मर्तव्या। अत: त्वया मया सह मैत्रीं सम्पाद्य तस्या: परिणामस्य परीक्षा अवश्यं कर्तव्या", पुन: वायसेनोक्तम्।

तत: मूषकेण उत्तरितम्, "त्वं सज्जन:, भद्र: सुस्वभावी स्या: अपि, मम अहितं भवतु इति भावना तव मनसि न स्यादपि, परं तथापि आवयो: सौहर्देन किमपि हितं साधयितुं न शक्नुव:। अन्ततो गत्वा स्वभाव: एव बलीयान् भवति। मम उत्तमस्वभावात् कोऽपि मम शत्रुभावं न गच्छेत् इति यद्यपि त्वं कथयसि, तथापि इमानि उदाहरणानि पश्य। पाणिनिनामकं वैयाकरणं कश्चन सिंह: हतवान्। दार्शनिकं जैमिनिं कश्चन हस्ती

मारितवान्। कश्चन छन्दःशास्त्रपण्डितं पिङ्गलं मकरः कवलीकृतवान्। ईदृशसज्जनानाम् इयं कथा, का पुनः मम?'' इति।

मूषकस्य वचनानाम् उत्तररूपेण वायसः इत्थमब्रवीत्, ''सत्यमेव तव वचनम्। किन्तु ममापि वचनानि श्रुणु। परस्परसाहाय्येन एव मनुजेषु मैत्रीभावः उत्पद्यते। प्रकृत्या उत्तमजनेषु तु सकृद्दर्शने एव मित्रता जायते। प्रकृत्या सज्जनः अहम् अद्य त्वां प्रतिश्रुणोमि, यत् तव अहितं कदापि न करिष्ये'' इति।

''तव वचसि विश्वासं कर्तुं न अर्हामि। यतो हि शत्रुवचांसि विश्वासार्हाणि न भवन्ति। यः शत्रौ न विश्वसिति, तस्य तु स्वयम् ईश्वरः अपि अहितं कर्तुं न पारयति। इन्द्रः कपटेन दित्याः गर्भे छिद्रं कृतवान्। यतः दितिः इन्द्रे विश्वसितवती। अतः शत्रुः कदापि विश्वासभाक् न भवति। बलशाली मनुष्यः अपि दुर्बलस्यापि अरेः वचांसि विश्वस्य विनाशपथं प्राप्तुं शक्नोति'', मूषकः पुनः अवदत्। मूषकस्य वचनानि आकर्ण्य किञ्चित्कालं वायसः स्तब्धः जातः। तस्य मनसि चिन्तनं तु प्रचलदेवासीत्, 'अयं मूषकः कुतः एवं नीतिमान् जातः! अधुना तु एतेन सार्धं मैत्रीं सम्पादयितुं मम कामना द्विगुणिता जाता। एतेन यद्यपि अहं तिरस्कृतः, तथापि सा कामना न क्षीयते'।

अन्ततः सः अवदत्, 'रे हिरण्यक, उच्यते विबुधैः, यत् सप्तपादमितां भूमिं समेत्य चलित्वा अपि द्वयोः मैत्रम् उत्पद्यते। अधुना अनेन सुदीर्घेण सम्भाषणेन त्वं विनायासं मम मित्रताम् आगतोऽसि। किम् आवयोः ईदृशः संवादः प्रतिदिनं त्वया अनुमन्यते?'' इति।

काकस्य वाक्चातुर्यं तथा च तस्य वचनात् तस्य साधुत्वं ज्ञात्वा मूषकः अवोचत्, ''अस्तु, तथा भवतु। किन्तु त्वया मम बिले कदापि प्रवेशः न कर्तव्यः'' इति।

काकेनापि सः समयः अङ्गीकृतः।

*(अनुवर्तते)*





# माधवस्य वाणिज्यचातुर्यम्

पुरन्दरः परमेश्वरः च मिथः प्रियसुहृदौ आस्ताम्। वृत्त्या वणिजौ तौ द्वावपि वाणिज्ये निपुणौ। तयोः अन्यतरः वस्त्रवणिक् आसीत्, अपरः धान्यवणिक् च। द्वाभ्यामपि मित्राभ्याम् अविरतप्रयत्नैः निष्ठया स्वच्छव्यवहारेण च बहुधनम् अर्जितमासीत्। स्वस्ववाणिज्ये जायमानां प्रगतिं चर्चयितुं तौ द्वावपि मासे द्विवारं मिलतः स्म।

अथैकदा परमेश्वरः पुरन्दरं मेलितुं तस्य गृहमायातः। गृहप्राङ्गणे चर्चारतयोः तयोः कश्चन अन्नार्थी तत्रायातः।

परमेश्वरः तं याचकं क्रोधेन तर्जितवान्, ''कस्मादेवं याचसे भोः? त्वं तु पङ्गुः अपि न दृश्यसे। उदरभरणार्थं भिक्षाटनस्यापेक्षया वृत्त्यन्वेषणं कस्मात् न करोषि?'' इति।

''महोदय, अनाथोऽस्मि। अहं तु मम मातापितरौ न स्मराम्यपि। मम स्मरणानुसारं तु बाल्यादेव मार्गेषु इतस्ततः अटन् भिक्षां च याचित्वा प्रवृद्धोऽहम्। माम् अजानानाः जनाः कथं वा मयि विश्वस्य मह्यं वृत्तिं दद्युः?'' करुणस्वरेण याचकेनोक्तम्।

पुरन्दरः याचकम् अन्वकम्पत। अतः प्रथमं तावत् तन्निमित्तम् उत्तमभोजनस्य व्यवस्था कृता पुरन्दरेण। अनन्तरं सः याचकं तस्य नाम पृष्टवान्।

''भद्रमुख, माधवोऽयं जनः'' विनम्रतया उदतरत् याचकः। ''माधव, त्वं सुदृढः दृश्यसे। अधुना मानसिकं धैर्यम् उत्पाद्य त्वया वृत्तिः अन्वेषणीया। कियत् कालं यावत् एवं भिक्षाटनेन जीवनं यापयेः? बुद्धिचातुर्येण धनार्जनं कुतः न करोषि त्वम्?'' पुरन्दरः तमपृच्छत्।

''महाशय, भवान् मयि विश्वस्य किमपि कार्यं मह्यं दास्यति चेत् अहं तत् निश्चितरूपेण कर्तुं पारयामि'' उदरभरणात् सन्तृप्तः माधवः अत्युत्साहेन अवदत्।

पुरन्दरः कञ्चित्कालं चिन्तयित्वा अवोचत्, ''अस्तु, अहम् आम्रफलैः युक्तम्

ए. हैमवती



प्रत्येकं फलस्य मूल्यं विंशतिः रूप्यकाणि अस्ति। किन्तु अधुना त्वं तु प्रतिगृहं गत्वा विक्रयणं करिष्यसि, अतः तस्य मूल्यं त्वमेव निर्धारितं कुरु'' इति।

माधवे ततः निर्गते परमेश्वरः अगदत्, ''पुरन्दर, एतादृशेषु याचकेषु विश्वासः किम् अयोग्यः न भाति ते? अहं निश्चयेन ब्रवीमि, यत् फलस्यूतं स्वीकृत्य गतः सः भिक्षुकः न प्रत्यागच्छेत्। तैः फलैः भिक्षाटनेन विना दिनत्रयं तस्य उदरभरणं भवेदेव। ततः सः ग्रामान्तरं गच्छेत्। त्वया व्यर्थमेव तस्मै फलस्यूतः अर्पितः'' इति।

''सुहृद्, भवतु तथा। आवाभ्यामपि

एकं स्यूतं तुभ्यं ददामि। तानि फलानि विक्रीय धनमानय। स्वकौशलं प्रमाणीकर्तुं शक्नुयाः, चेत् निश्चयेन तव साहाय्यं करिष्ये'' इति।

ततः सः धृतपूर्वाणि समीचिनानि वस्त्राणि आनीय माधवाय दत्त्वा अवदत्, ''जीर्णशीर्णवसनानि परिधृत्य त्वं फलानि विक्रेतुं गच्छसि, चेत् प्रायः जनाः त्वत्तः फलानि न स्वीकुर्युः। अतः एतानि वस्त्राणि धर'' इति।

अनन्तरं सः सेवकम् आम्रफलानि माधवाय दातुम् आदिशत्। माधवः झटिति अपृच्छत्, ''महोदय, कृपया एतेषां फलानाम् आपणे विक्रयणमूल्यं कियदस्ति इति कथयतु'' इति।

माधवस्य विचारचातुर्येण प्रसन्नचित्तः पुरन्दरः अवदत् , ''एतानि सामान्यानि न, प्रत्यूत उत्तमानि फलानि सन्ति। ग्रामापणे

आवयोः व्यवसायः लघुविक्रयेण एव आरब्धः आसीत् खलु! तस्मिन् दिवसे रङ्गनाथमहोदयेन कृतेन साहाय्येन एव अद्य आवां स्वावस्थां प्राप्तुं शक्तवन्तौ। यदि अद्य कस्यचित् साहाय्यीभूताः भवेम, तर्हि तस्य उत्कर्षाय कारणीभूताः भवाम। अन्यथा सः फलस्यूतः कस्मैचित् दानरूपेण दत्तः इति चिन्तयित्वा सः विषयः सर्वथा विस्मर्तव्यः'' पुरन्दरः अभणत्।

परमेश्वरः अवदत्, ''अस्तु, अधुना त्वया सह विवादं कर्तुं नेच्छामि।'' ''भवतु नाम! मित्र! आगच्छ किञ्चित् भुक्त्वा विश्रामं कुर्वः तावत्। सायङ्काले मम नारिकेलोद्याने त्वां नयामि इत्युक्त्वा पुरन्दरः ततः उत्थितः।

सायङ्काले तौ द्वावपि नारिकेलोद्यानं प्रति विहारार्थं प्रस्थितौ। परमेश्वरः तदा वदन् आसीत्, ''सखे, त्वया फलस्यूतः सत्यमेव दानरुपेण दत्तः इति दृश्यते'' तावता एव

ताभ्यां रिक्तस्यूतं हस्ते गृहीत्वा प्रत्यागतः माधवः दृष्टः।

माधवः उपसृत्य अवदत्, ''मान्यवर, भवतः शुभाकाङ्क्षाभिः एव आम्रफलानां विक्रयणं सुकरं जातम्। कृपया धनमेतद् स्वीक्रियताम्। स्वल्पविलम्बेन आगमिष्यं चेत् प्रायः आवयोः मेलनं न अभविष्यत्'' इत्युक्त्वा तेन अर्जितं धनं पुरन्दरस्य हस्ते स्थापितम्।

''एकम् आम्रफलं त्वया कियता मूल्येन विक्रीतम्?'' सकुतुहलं पृष्टं परमेश्वरेण।

''आर्य, यः मत् पञ्चआम्रफलानि क्रीतवते अहम् एकमाम्रफलं विनामूल्यं दत्तवान्। किन्तु प्रत्येकम् आम्रफलं मया त्रिंशत्रुप्यकैः विक्रीतम्। मह्यं दत्ते स्यूते षड्विंशत्यधिकैकशतं आम्रफलान्यासन्। यदि एकस्य आम्रफलस्य विंशतिः रुप्यकाणि, तर्हि द्विसहस्रपञ्चशतविंशतिरुप्यकमितः मम आयः अभविष्यत्। किन्तु मया चिन्तितं, यत् पञ्चफलानां क्रयणे मया एकं फलं विनामूल्यं दातव्यम्। तथापि मया त्रिंशदधिकषड्शतं रुप्यकाणि अधिकानि प्राप्तानि।'' माधवः उदतरत्।

पुरन्दरः परमेश्वराय अवोचत्, ''योग्यस्य पुरुषस्य अवसरे कल्पिते सः स्वकौशलं प्रदर्शयितुं शक्नोति इति अधुना माधवेन प्रमाणीकृतम्'' इति।

''माधव, अहं तव सदाचरणेन व्यवहारकौशलेन च अतीव प्रसन्नः अस्मि। कुशाग्रबुद्धिना त्वया याचनं विहाय स्वव्यवसायः आरब्धव्यः। अद्यतनीयः धनलाभः त्वदीयः एव वर्तते। त्वया उपयोजितायाः युक्त्याः तथा च प्रतिगृहं गत्वा फलविक्रेयणार्थम् ऊढस्य कष्टस्य तत्फलम्। श्वः पुनः आम्रफलानां स्यूतद्वयम् इतः स्वीकुरु। एकसप्ताहाभ्यन्तरे यावत् धनम् अर्जितं भवेत्, तावता धनेन स्वव्यवसायस्य प्रारम्भं कुरु। तदर्थमहं निश्चयेन ते साहाय्यं करिष्ये। प्रियमाधव, त्वं निश्चयेन यशस्वी भविष्यसि'' इत्युक्त्वा हस्तेन माधवस्य स्कन्धं सोत्साहं परामृशन् पुरन्दरेण तस्मै शुभेच्छाः व्याहृताः।






# प्राणरक्षक: तडिताघात:

अथैकदा कस्मिंश्चित् वने दिवानिशं विना खण्डं अतिवृष्टि: अजायत। सर्वै: खगै: महावृक्षा: आश्रिता:। पर्जन्यधाराभ्य: आत्मानं रक्षन्त: केचन खगा: सुखेन नीडे स्थिता आसन्। तेषु कैश्चन खगै: वर्षर्तो: आरम्भात्प्रागेव पर्याप्ता: धान्यकणा: अन्ये च खाद्यपदार्था: सङ्गृहीता: आसन्।

एतेषु एव पक्षिषु अन्यतम: सुपर्ण: नाम कीर: कस्मिंचित् वृक्षकोटरे निवसति स्म। तस्मिन् दिवसे प्रात: उदरपूर्णं प्रातराशं कृत्वा स: निद्रालस: जात: आसीत्। वर्षावसाने क्षेत्रं गत्वा मधुरकलायस्य कणा: चेतव्या: इति चिन्तयन् आसीत् स:।

यद्यपि कञ्चित्कालं वर्षा स्थगिता, तथापि नभ: मेघाच्छदितम् आसीत्।

सुपर्णस्य स्मृतिपथि तस्य बाल्यकाल: आयात:। स: स्मृतवान्, यत् कथं तस्य पिता नैकविधगगनगतिचर्या: तं शिक्षितवान्। ते दिवसा: नूनं साहसपूर्णा: हर्षोल्लासान्विता: च आसन्। स्वबाल्यकालं स्मारं मित्राणि च स्मारं सुपर्ण: भृशं मुदित:।

"सुपर्ण:! अयि मित्र सुपर्ण!", इति आत्मानमुद्दिश्य द्वारि सुपर्णेन कस्यस्वित् ध्वनि श्रुत:। कोटरमुखसमीपम् आगतेन तेन तस्य बालवयस्य रक्तमुखनामा कीर: द्वारि तिष्ठन् दृष्ट:।

मित्रागमनेन पुलकिततनु: प्रहृष्टात्मा च सुपर्ण: तस्य स्वागतं व्याहरन् अवदत्, "अहो विस्मरकरमेतत्! अहमधुना तव विषये एव चिन्तयन् आसम्। आगच्छ, अन्त: प्रविश! पर्जन्ये डयमानस्य तव पक्षौ क्लिन्नौ स्त:। अस्माकं शयनागारं प्रविश्य त्वं सुखदोष्णताम् अनुभवितुं शक्नोषि।"

सुपर्णस्य मित्रं तस्य गृहं प्राविशत्। "अन्ये कुटुम्बजना: क्व सन्ति?" इति रक्तमुखेन पृष्टम्।

एम्.के. सोमनाथपनिकर:

''मम भार्या समीपस्थे एव कोटरे अस्ति। तया प्रसूताभ्याम् अण्डाभ्याम् अधुना नातिविलम्बेन शावकौ जनिं लप्स्येते'', सुपर्णः अवदत्। ''अहो साधुवार्तेयम्! अभिनन्दनीयस्त्वम्!'' इत्यानन्देन अभणत् रक्तमुखः।

ततः बाल्यकालस्य साहसपूर्णानां प्रसङ्गानां स्मरणे रतयोः तयोः बहिस्तात् कमपि ध्वनिं श्रुत्वा सुपर्णः द्वारसमीपं गतः। तत्र कोटरेमुखे वर्तमानस्य कृष्णसर्पस्य मणिवत्प्रकाशमाने नेत्रे अवलोक्य आगच्छन्तीम् आपदम् उत्प्रेक्ष्य च किङ्कर्तव्यमूढः सुपर्णः नूनं पाषाणीभूतः। भीषणं फूत्कारं कृत्वा सर्पः अवोचत्, ''अतीव बुभुक्षितोऽस्म्यहम्। युवयोः एकं खादितुम् इच्छामि। शुकस्य मांसम् अतिरुचिकरं भवति इति जानाम्यहम्'', इत्युक्त्वा तेन पुनरपि फूत्कारः कृतः।

''के भगवन्! त्राहि आवाम्! अयं कृष्णसर्पः आवां निगिलितुम् आयाति!'', सुपर्णः आक्रोशत्।

द्वेऽपि मित्रे महता भयेन अवेपताम्। यदा तेन फणिना स्वशिरः कोटरे निवेशितं तदैव तस्मिन् वृक्षे कर्णकटुमेघगर्जनया सह आकाशात् महाविद्युत्पातः समजायत। दग्धमांसस्य गन्धेन सम्पूर्णोऽपि कोटरः परिपूर्णः।

''अहो आश्चर्यम्! अयं विद्युदाघातः सर्पे एव जातः'', सुपर्णः उच्चरवेण अब्रवीत्। नातिचिरेण कृष्णसर्पस्य प्राणहीनं शरीरं कोटरात् अधः भूमौ सशब्दं पतितम्।

क्षणार्धे पूर्णतां गतम् एनं प्रसङ्गं प्रत्यक्षम् अनुभूयापि द्वावपि शुकौ तस्मिन् विश्वसितुं नाशक्नुताम्। केनचित् चमत्कारेणैव तडिताघातकारणात् तयोः प्राणाः रक्षिताः आसन्।

''ईशः नूनं दुरवस्थायाम् अस्माकं साहाय्यीभूतः भवति अस्मान् विघ्नेभ्यः रक्षति च'', अनुभूतभयेन अद्यापि कम्पमानः रक्तमुखः अवदत्। प्रारब्धायां वर्षायामपि कोटरे उपविष्टौ तौ वयस्यौ गोष्ठीसुखमनुभूय सुखेन कालं नीतवन्तौ।





# भाग्यदेवता

**आ**फ्रिकादेशे कस्मिंचित् प्रदेशे कश्चन धीवरः प्रतिवसति स्म। सः प्रतिदिनं एकं बृहदाकारं सरोवरं गत्वा तत्र मत्स्यग्रहणं करोति स्म। मत्स्यग्रहणार्थं सः जालरूपेण कण्डोलानाम् उपयोगं करोति स्म। तस्य समीपे एकः प्लवः अपि आसीत्। तस्मिन् प्लवे सर्वानपि कण्डोलान् स्थापयित्वा सरोवरं गच्छति स्म। सरोवरे यत्र गाधजलं भवति स्म, तत्र रज्जुबद्धाः कण्डोलाः जले निमज्जयति स्म सः। जले कुत्र कण्डोलाः क्षिप्ताः इति ज्ञातुं सः रज्जुषु काष्ठखण्डान् बध्नाति स्म। गृहगमनसमये सः सर्वान् कण्डोलान् उपरि कर्षित्वा प्लवे स्थापयित्वा ततः मीनान् गृह्णाति स्म, तान् विक्रीय प्राप्तेन धनेन च उदरभरणं करोति स्म।

अथैकदा धीवरः गृहगमनसमये कण्डोलान् सरोवरजलात् उपरि कर्षन् आसीत्। द्वयोः कण्डोलयोः एकः अपि मत्स्यः नासीत्। तृतीये कण्डोले तेन एकः कर्कटः प्राप्तः। किन्तु यदा तेन चतुर्थः कण्डोलः कर्षितः तदा सः अतीव भारयुक्तः अभासत तस्य। 'अरे... मम तु भाग्योदयः एव जातः। नूनं मम दारिद्र्यदशा समाप्तिं गमिष्यति' इति मनसि चिन्तयन् एव सः चतुर्थं कण्डोलं उडुपे कर्षितवान्। किन्तु अहो दुर्भाग्यम्! ततः काचित् जीर्णगात्रा वृद्धा तेन प्राप्ता।

आश्चर्यपूर्णं तस्य मनः वृद्धां दृष्ट्वा घृणया जुगुप्सया च आवृतम् अधुना। सः तां वृद्धां पुनः सरोवरे पातयितुम् उद्युक्तः। किन्तु तदैव सा धीवराय अवोचत्, "मां जले मा निमज्जयतु। माम् आत्मना सह स्वगृहं नयतु कृपया। न कामपि हानिं जनयिष्यामि भवते, प्रत्युत भवतः लाभस्य कारणं भवेयम्" इति।

"किं वृथा जल्पसि? अहं त्वां मम गृहं कथं वा नयामि? स्वस्य उदरभरणमपि मया महता कष्टेन साध्यते। एवं सति त्वां कथं वा पालयेयम्?" धीवरः उदतरत्।

किन्तु वृद्धा साक्षात् धीवरस्य पादयोः पतित्वा तं प्रार्थितवती। तस्याः अनुनयेन धीवरः तां स्वगृहम् अनयत्। निर्धनः सः कथं कथञ्चित् स्वभोजनात् कञ्चित् भागं तस्यै दत्तवान्। द्वयोः भोजने समाप्ते धीवरः ताम् अपृच्छत्, "त्वया उक्तमासीत्, यत् तव कारणात् मम लाभः भवेदिति। सर्वं सविस्तरं स्पष्टं च कथय। तव कारणात् मम को वा लाभः स्यात्?" इति।

"श्वः सायङ्कालपर्यन्तं भवतः समीपे पशूनां महान् गणः भवेत्। भवान् च तस्य स्वामी भविष्यति। अतः पशूनां निवासार्थं महतः गोष्ठस्य निर्माणम् आरभताम्" वृद्धा उक्तवती।

तदाकर्ण्य धीवरः तां बहून् प्रश्नान् अपृच्छत्। किन्तु वृद्धा धीवरेण पृष्टस्य एकस्यापि प्रश्नस्य उत्तरम् अदत्त्वा "केवलं मम वचनानि अनुसरतु" इति आदिशत्।

धीवरः प्रसन्नचित्तः जातः। द्वितीयेऽहनि तेन पर्णदारुकण्टकयुक्तः महान् गोष्ठः निर्मितः। सायङ्काले सन्निहिते तस्य गोष्ठनिर्माणकार्यं सम्पन्नम्।

तावता एव सरोवरस्य दिशि पशूनां रवः तस्य श्रुतिपथम् आयातः। नातिविलम्बेन



एकं वृषभम् अनुसृत्य बहवः गाः तथा च वत्साः गोष्ठं प्रविष्टाः। गोष्ठम् आगत्य सर्वेऽपि पशवः तत्र तथा सुप्ताः यथा प्रायः ते प्रतिदिनं तमेव गोष्ठम् आगच्छन्ति स्म।

तदारभ्य धीवरस्य जीवनरीतिः एव परिवर्तिता। सः अधुना दरिद्रः निर्धनः च न आसीत्, अपि तु धनवान् जातः। समीपवर्तिषु ग्रामेषु तेन समं धनवान् न कोऽपि आसीत्। क्षेत्रं क्रीत्वा सः अधुना भूस्वामी जातः। अनुरूपां कन्यां परिणीय सः स्वगृहमपि सम्यक् निर्मापितवान् विभूषितवान् च। पूर्वं वृत्त्या धीवरः असौ अधुना लब्धप्रतिष्ठितेषु जनेषु अगण्यत। यदि कदापि कश्चन स्वसमस्यां समाधातुम् आयाति, तर्हि अयं असन्तोषेण शिरः चालयन् वदति स्म, "किं तव समस्यायाः

निवारणम् इति एकमेव कार्यं वर्तते मत्सविधे? नास्ति मे अधुना समयः। श्वः पश्य माम्। तथा च रिक्तहस्तेन नागन्तव्यं मां मेलितुम्'' इति। एवम् अधुना तस्य वचनानि अपि गर्वपूर्णानि भवन्ति स्म।

एवं षण्मासाः अतीताः। एकस्मिन् दिवसे ग्रामे सहभोजनार्थं धीवरः गतः। तत्र धीवरेण न केवलम् अतिभुक्तम्, अपि तु अतिशयेन मद्यम् अपि पीतम्। सहभोजनोत्सवे समाप्ते सर्वत्र अन्धकारः प्रसृतः। मद्यपानेन स्वगतिं नियन्त्रितुम् अशक्तः धीवरः यथा कथञ्चित् गृहं प्राप्नोत्। गृहस्य सर्वाण्यपि द्वाराणि पिधाय वृद्धा गभीरनिद्रारता आसीत्।

''द्वारम् उद्घाटय। शीघ्रमुद्घाटय द्वारम्'' इति धीवरेण बहिस्तात् आक्रोशे कृतेऽपि किमपि प्रत्युत्तरं नागतम्। कोपाविष्टः सन् सः प्रलपनम् आरब्धवान्,''कुत्र गताः सर्वे? कुत्र वर्तते सा वृद्धा, यामहं जलाशयात् अत्रानीतवान्? अयि स्थविरे, उत्तिष्ठ, शीघ्रं द्वारं चोद्घाटय'' इति। तस्य क्रोधपूर्णं रवं श्रुत्वा शय्यातः उत्थिता वृद्धा द्वारमुदघाटयत् तत्रैव च स्थिता। ''त्वया वृथैव अहं तिरस्कृता अपमानिता च। त्वादृशकृतघ्नैः जनैः सह उषितुं नैव कामये। श्वः एव अहं स्वस्थानं प्रति गमिष्यामि'' दुःखिता वृद्धा अवोचत्।

''यथा तवेच्छा। तव गमनात् मम भारोऽपि न्यूनः भवेत्। शीघ्रमेव गच्छेतः'' धीवरः अवदत्।

द्वितीयेऽहनि प्रातरुत्थाय वृद्धा स्वच्छतां कृत्वा केवलं शय्यादिस्वसाहित्यं स्वीकृत्य ततः निर्गता। तस्मात् गृहात् एकं लघु वस्त्वपि सा न स्वीकृतवती। गृहद्वाराणि उद्घाट्य सा जलाशयं प्रति प्राचलत्। धीवरस्य गोष्ठे विद्यमानाः सर्वेऽपि पशवः ताम् अनुसरन्तः जलाशयं प्रति गताः। ततः ते अन्तर्हिताः जाताः। धीवरस्य सौभाग्यं नष्टम्। पुनः सः पूर्वस्थितिं प्राप्य मत्स्यविक्रयणं कृत्वा स्वोपजीविकाम् आरब्धवान्।





# परामर्शदाता धर्मपालः

एकस्मिन् ग्रामे एकः विचित्रः आपणः आसीत्। तस्य नामासीत् सूचनापणः। धर्मपालनामा एकः वणिक् तम् आपणं चालयति स्म। तेन एकस्यां चिटिकायाम् एकैका सूचना लिखिता आसीत्। यः कोऽपि परामर्शम् इच्छति स्म, तं जनं धर्मपालः तां सूचनां क्रीणाति स्म, प्रत्येकं सूचनायाः मूल्यं शतं रुप्यकाणि आसीत्। यः कोऽपि तां चिटिकां क्रीणाति, तस्यां लिखितां सूचनां च पालयति स्म, सः तया सूचनया लाभान्वितः भवति स्म।

एकस्मिन् दिवसे तस्य आपणम् कश्चन श्रेष्ठी आगतः। सः महाधनवान् आसीत्। सूचनापणे सः त्रिशतं रुप्यकाणि दत्त्वा सः सूचनात्रयम् अक्रीणात्। ताः सूचनाः एवम् आसन् - यदा कदापि यात्रार्थं प्रस्थातव्यं भवेत्, तदा पत्न्यै किमपि न वक्तव्यम्। यदा मार्गे भोजनं करणीयम् भवेत्, तदा कदापि मार्गस्य पार्श्वे न करणीयम्, सहसैव कदापि केनापि सह कस्मिन्नपि विषये पणः न करणीयः इति।

एताः सूचनाः क्रीत्वा सः धनवान् श्रेष्ठी ततः निर्गतः। सः एतज्ज्ञातुम् समुत्सुकः आसीत्, यत् तासु सूचनासु कियती सत्यता अस्ति इति। सः तदर्थं पत्न्यै अकथयित्वा एव नवस्यूतेषु नवसहस्रं रुप्यकाणि स्थापयित्वा शकटम् आरुह्य वाणिज्यार्थं नगरम् प्रति प्रस्थानम् अकरोत्। श्रेष्ठिनि काञ्चन भूमिं गते सति तस्य भोजनवेला समागता। मार्गात् नातिदूरं तेन एकः कूपः दृष्टः। कूपस्य समीपम् भोजनं कृत्वा सः भूयः अग्रे प्रस्थितः। अनतिदूरं गत्वा सः स्वसमीपस्थान् स्यूतान् अगणयत्, तदा तेन विज्ञातम्, यत् ते अष्टैव आसन्।

एस्. राजगोपालरावः



यदा पुनः कूपस्य समीपम् गत्वा सः तं स्यूतम् अन्विष्टवान्, तदा सः नवमः स्यूतः तेन तत्र प्राप्तः। सः स्यूतः तत्रैव तृणेषु पतितः आसीत्। यदा सः स्यूतं गृहीत्वा पुनः सः शकटस्य समीपम् आगच्छन् आसीत्, तदा तस्य पादे एकः कण्टकः लग्नः। अनेन कण्टकेन तस्य पादे जातः पीडाकारकः ओषधिभिरपि दुरपहरणीयः पिटकः अकस्मात् नष्टः अभवत्। एतस्मिन् कण्टके कोऽपि विशेषः अस्ति इति चिन्तयित्वा सः प्रत्यागमनसमये तं कण्टकं गृहं नेतुम् इच्छन् तत्र कूपस्य समीपम् एकं चिह्नम् आलिखत्।

नगरे तेन सम्यक् विक्रयणं कृतं बहुधनञ्च अर्जितम्। आगच्छतः तस्य कण्टकस्य विस्मरणम् सञ्जातम् अन्येन च मार्गेण सः स्वग्रामं प्रति प्रायात्। यदा सः ग्रामं प्राप्नोत्, तदा तस्य ग्रामस्य लक्षाधीशः कश्चन श्रेष्ठी केनचित् पिटकेन पीडां सहमानः आसीत्। तेन एवम् उद्घोषितम् आसीत्, यत् यः कोऽपि तस्य इमं पिटकरोगं परिहरिष्यति, तस्मै सः दशसहस्रं रुप्यकाणि दास्यति। परन्तु न कोऽपि तस्य चिकित्सां कर्तुम् अपारयत्।

यदा एषः श्रेष्ठी इमम् विषयम् आकर्णयत्, तदा सः तं कण्टकम् अस्मरत्। यदि तं कण्टकम् आनेतुं शक्नोमि, तर्हि तेन सः तस्य श्रेष्ठिनः समस्यां निवारयितुं पारयामि, दशसहस्रं रुप्यकणि च प्राप्नोमि। अनेन उत्साहकारकविचारेण सः धर्मपालात् क्रीताः ताः सूचनाः व्यस्मरत्। सः पत्न्यै अकथयत्, यत् तेन सः गोखरुकण्टकः तत्र एकस्य कूपस्य समीपे गोपितः अस्ति, येन अधुना सः दशसहस्रम् रुप्यकाणि लब्धुं शक्ष्यति इति। "अहम् अधुनैव तस्य लक्षाधीशस्य गृहं गत्वा तं समाश्वासयामि। श्वः एव गत्वा अहं तं कण्टकम् आनयामि" इति सः पत्नीम् अवदत्। पत्नी इमां वार्तां किमपि महद्रहस्यम् मन्यमाना प्रतिवेशिन्यै महिलायै अकथयत्। सा स्वपतये च अवदत्। यदा एषः वणिक् तस्य लक्षाधीशस्य गृहं गच्छन् आसीत्, तदा प्रतिवेशी जनः तं मिलितः। द्वौ अपि आलपन्तौ आस्तां, तदा ताभ्यां ज्ञातम्, यद् द्वौ अपि एकस्य एव कार्यस्य निमित्तम् गच्छन्तौ स्तः।

''सः पिटकः कथं शमेत् इति मां विहाय न कोऽपि जानाति'', सः श्रेष्ठी अवदत्।

''अहमपि जानामि एतद्विषये'', सः प्रतिवेशी अवदत्। ''तस्य लक्षाधीशस्य व्याधिं त्वं शमयितुं न शक्नोति भवान्'', सः श्रेष्ठी अवदत्।

''कथं नेति वदति भवान्? अहमेव तत्करोमि। इष्यते चेत् पणं कुर्वः'', इत्युक्त्वा सः प्रतिवेशी श्रेष्ठिनं समचोदयत्। श्रेष्ठी ताः सूचनाः, याः तेन क्रीताः आसन्, सर्वथा व्यस्मरत्। सः तं प्रतिवेशिने अकथयत्, ''यदि भवान् तस्य लक्षाधीशस्य पिटकं शमयितुं शक्ष्यति, तर्हि मम गृहे वर्तमानं यत्किमपि भवान् स्पृशति, तदहं भवते दास्यामि।''

सः प्रतिवेशी तस्मिन्नेव दिने सायङ्काले कूपस्य समीपम् अगच्छत्, यत्र सः कण्टकविशेषः वणिजा गोपितः आसीत्। सः तं कण्टकं भूमिं खनित्वा अगृह्णात्। तं च स्वीकृत्य लक्षाधीशस्य उपचारान् अकरोत्।

तस्य श्रेष्ठिनः तत्र गमनात् पूर्वमेव एतत् सर्वं प्रवृत्तम्। मन्यताम् यदि नियमानुसारं सः प्रतिवेशी तस्य श्रेष्ठिनः गृहम् आगत्य तस्य धनागारं स्पृशति, तर्हि तस्मिन् विद्यमानं सर्वं किमपि रत्नादिकं, सहस्रावधिरुप्यकाणि च तस्य प्रतिवेशिनः हस्तसात् भविष्यति। तेन श्रेष्ठिना धर्मपालस्य सूचना न पालिता, अतः तस्य इत्थं हानिः जायमाना आसीत्। सः पत्न्यै अवदत्, यत् 'सः तं कण्टकम् आनेतुम् गच्छन् अस्ति। तेन प्रतिवेशिना सह पणः अपि कृतः अस्ति' इति।

श्रेष्ठी धावन्नेव सूचनापणस्य स्वामिनः



धर्मपालस्य समीपम् आगतः तस्य पादयोश्च पतितः। यत्किमपि प्रवृत्तम् आसीत्, तद्विषये धर्मपालाय अकथयत्। सः तं कमपि ईदृशम् उपायं कथयितुं प्रार्थयत येन तस्य भविष्यमाणा हानिः दूरीभवेत्।

"अधुना विस्मरतु भवान्, यत्किमपि प्रवृत्तम् तत्। अधुना भवान् भवतः धनमञ्जूषां कुत्रचित् गृहस्य च्छदि गोपयतु, यत्र कोऽपि सहजतया प्रवेशं कर्तुं न शक्ष्यति। यदा प्रतिवेशी आगमिष्यति, तदा तत्र एकाम् निःश्रेणिकां स्थापयतु। अहमपि तत्र आगच्छामि", धर्मपालः अवदत्। श्रेष्ठिनः प्रतिवेशी नियमानुसारं तस्य गृहात् किञ्चित् वस्तु नेष्यति इत्येतत् ज्ञात्वा पञ्चषाः जनाः तत्र द्रष्टुं समागताः। सः प्रतिवेशी अपि पञ्च परिचितान् जनान् गृहीत्वा श्रेष्ठिनः गृहं समायातः। गृहस्य अभ्यन्तरे सः इतस्ततः अपश्यत्, परन्तु कुत्रापि सः श्रेष्ठिनः धनमञ्जूषां न अपश्यत्। तेन ज्ञातम्, यत् धनमञ्जूषा तु गृहस्य उपरितनभागे अस्ति। तथा च तत्रैव एका निःश्रेणिका। अतः मञ्जूषाप्राप्त्यर्थम् उपरि आरोढुं सः प्रतिवेशी ताम् निःश्रेणिकाम् अधरत्।

"पश्यतु श्रेष्ठिन्! अनेन एषा निःश्रेणिका स्पृष्टा अस्ति। अतः एषा न अधुना भवतः, अपि तु एतस्यैव। भवता एतस्मिन् पणे पराजयः लब्धः अस्ति", इति धर्मपालः श्रेष्ठिनम् उद्दिश्य उच्चैः अवदत्।

तच्छ्रुत्वा सः प्रतिवेशी वाक्येऽस्मिन् आक्षेपं प्राकटयत् श्रेष्ठिनः धनमञ्जूषां प्राप्तुकामः सः निःश्रेणिकाग्रहणं नाङ्गीकृतवान्। परं ये जनाः तत्र समागताः आसन् ते धर्मपालस्यैव वचनं समर्थितवन्तः, प्रतिवेशिनः निःश्रेणिकाग्रहणादृते अन्यस्य कस्यापि वस्तुनः ग्रहणं नान्वमन्यन्त। अनया युक्त्या तस्य श्रेष्ठिनः नाधिका धनहानिः सञ्जाता धनमञ्जूषा च रक्षिता।





# विधि: न प्रमाद्यति।

कस्मिंश्चित् ग्रामे कस्यचित् कृषीवलस्य गृहे आसीत् एक: बालक: सीताराम: नाम। स: कृषीवलस्य गा: महिषी: च चारयति स्म। प्रतिदिनं प्रात: उत्थाय, स्वामिन: गृहे कार्यं कृत्वा, यातयामम् अन्नं भुक्त्वा शीघ्रमेव पशून् चारयितुं प्रतिष्ठते स्म।

ग्रामात् बहि: एकम् प्राचीनम् उद्यानम् आसीत्। पूर्वं कदाचित् तत्र फलवन्त: नैके वृक्षा: भवन्ति स्म। अधुना तु सर्वत्र तृणवृद्धि: जाता आसीत्। अत: उद्याने गवां-महिषीणां कृते प्रभूतं खाद्यम् अवर्तत। तथा च न कोऽपि आसीत् तत्र प्रबन्धक: य: पशून् चारणात् निवारयेत्। तत्र केचन वृक्षा: अपि आसन् येषु गोपालकबाला: तदा तदा क्रीडार्थम् आरोहन्ति स्म। तत्र कदाचित् फलानि अपि लभ्यन्ते स्म। सीताराम: स्वस्य अन्यमित्रै: सह स्व-स्व पशून् चारयितुं तस्मिन्नेव उद्यानं प्रति आयाति स्म। चरत्सु पशुषु सर्वे बाला: आसायं तत्रैव क्रीडन्त: अरमन्त। आतपकाले तरुच्छायाम् आश्रित्य सर्वे उपविश्य वार्तालापमग्ना: भवन्ति स्म। संप्राप्ते सायङ्काले सर्वेऽपि स्वग्रामं प्रतिनिवर्तन्ते स्म।

एकदा सीताराम: यथाक्रमं पशून् प्राचीनोद्यानं नीतवान्। परन्तु तस्मिन् दिने आसीत् कश्चन उत्सव:, अत: एक: अपि तस्य सुहृद् न आगतवान्। एकाकिन: तस्य मन: उद्याने अपि न अरमत। स: सर्वत्र अभ्रमत्। स: स्वस्य रोषं पशूनां पुरत: प्रदर्शितवान्। अकारणमेव तान् इतस्तत: निवारयति स्म, तथापि समय: सर्वथा स्तब्ध: इत्येव तस्य भाति स्म।

टी. सत्यनारायण:

सीताराम: एकाकितया निर्विण्ण:। तावता एव एका बृहती मक्षिका तं परित: एव गुञ्जारवम् अकरोत्। आत्मानं प्रति एव ताम् आगच्छन्तीं दृष्ट्वा सीताराम: एकेनैव प्रहारेण तां हतवान्। द्विधा च छित्वा दूरं प्रक्षिप्तवान्। तस्या: शरीरखण्डौ समीपवर्तिनि हरितगुल्मेषु पतितौ। पतितयो: तयो: खण्डयो: सा मक्षिका: पुनरपि जीवनं प्राप्य इव पुन: उदडयत।

सीताराम: चकित:। यत्र सा मक्षिका पतिता आसीत्, तं स्थलं स: सूक्ष्मतया अवलोकितवान्। तत्र गुल्मेषु बहूनि पर्णानि आसन्। तानि न सामान्यानि इति अभासत। अतीव मृदूनि आसन् तानि पर्णानि। एतेषां कारणात् एव सा मक्षिका पुनरुज्जीविता इति तस्य मति: जाता।

तेन पूर्वमपि सञ्जीवनीपर्णानां विषये श्रुतम् आसीत्। इयमेव सा ओषधी: इति तेन चिन्तितम्। अत: ताम् ओषधीं स: सम्यक् निरीक्षितवान्।

'सत्यमेव मृतसञ्जीवनी वनस्पति: वर्तते इयम्' इति विषये सीताराम: न सर्वथा विश्वासम् अकरोत्। कदाचित् पर्णेभ्य: उद्गता सा माक्षिका तेन पूर्वं प्रक्षिप्ता मृतमक्षिका न स्यादेव इति विचिन्त्य स: सम्पूर्णे उद्याने अभ्रमत्। तत्र तेन कश्चन मृत: कीट: दृष्ट:। कीटम् आनीय स: पुन: सञ्जीवनीपर्णेषु स्थापित:। मृत: स: कीट: पर्णेषु स्थापित: एव उज्जीवित: भूत्वा अत्र तत्र उड्डीय गत: अपि।

अधुना सीताराम: अवगतवान्, यदेषा



'सत्यमेव सञ्जीवनी वनस्पतिः' इति। यः कोऽपि तां स्पृशेत्, सः अवश्यमेव जीवितः भवेत्। एताम् अद्भुतां वार्तां स्वसुहृद्भ्यः कथयितुं सः अतीव उत्सुकः जातः।

अन्येद्युः यदा सः स्वस्य सहचरैः गाः महिषीः च चारयितुं प्रस्थितः, तदा तेन उक्तम्, यत् "अहं सञ्जीवनीवनस्पतिं जानामि। मृतमक्षिकां मृतकीटं च सञ्जीवनीवनस्पतिद्वारा अहं पुनरपि जीवितम् अकरवम्" इति।

सञ्जीवनीवनस्पतिविषये श्रुत्वा तस्य मित्राणि न किञ्चिदपि आश्चर्यम् अनुभूतवन्तः, प्रत्युत अविश्वासेन ते सीतारामस्य उपहासमेव अकुर्वन्। तेन नितरां कुपितः सीतारामः न कस्मै अपि सञ्जीवनीम् अदर्शयत्।

एवमेव अतीतानि कानिचन दिनानि। एकस्मिन् दिने प्रातः एव ग्रामप्रमुखः मृतः। ग्रामे तस्य अट्टद्वयात्मकं विशालं भवनमासीत्। सः न केवलं धनिकः, वदान्यः दानशूरः अपि आसीत्। नैकानि मन्दिराणि तेन निर्मितानि, नैके कूपाः सरसः च निर्मिताः, धर्मशालाः अपि रचिताः। ग्रामे यः कोऽपि गृहभवनं रचयति अथवा यस्य कस्यापि गृहे विवाहमङ्गलदिकार्यक्रमः भवति, ग्रामप्रमुखः अवश्यं तस्मै साहाय्यार्थं प्रभूतं धनं यच्छति स्म। अतः ग्रामजनाः तं देवस्वरूपमेव मन्यन्ते स्म।

मृत्योः पूर्वम् एकमासं यावत् भृशम् अस्वस्थः ग्रामप्रमुखः शय्याबद्धः एव आसीत्। आमासं विविधाः चिकित्साः



कृता:, नैकविधानि औषधानि दत्तानि, नैके वैद्या: समागत्य परीक्षितवन्त:। परन्तु अन्तत: सर्वेऽपि उपाया: विफला: जाता:। प्रातरारभ्य एव ग्रामप्रमुखस्य पुरत: सर्वे ग्रामीणा: समायाता:। सर्वे ग्रामप्रमुखमेव प्रशंसन्ति स्म। अन्ये केचन अवदन्, ''वैद्य: केवलं औषधदाने समर्थ:, न जीवनदाने'' इति।

इदं वचनं सीतारामस्य श्रुतिपथमायातम्, तदा स: पशून् उद्यानं प्रति नयन् आसीत्। सर्वं विदित्वा स: अवदत्, ''अहमेवं ग्रामप्रमुखं जीवयितुं प्रयतिष्ये। जीर्णोद्याने अस्ति सञ्जीवनीवनस्पति:'' इति। स: पूर्वं घटितं सर्वं वृत्तं जनेभ्य: अश्रावयत्। बहव: तस्य वचनं न विश्वसितवन्त: एव। परन्तु द्वित्रा: तेन सह जीर्णोद्यानं गन्तुं सिद्धा:।

सीताराम: पूर्वं जीर्णोद्यानं प्राप्त: अनन्तरं ग्रामवासिन: आगता:। सञ्जीवनीपर्णानि कुत्र सन्ति इति स: जानाति स्म। अत: स: साक्षात् तद् स्थानं गतवान्। परन्तु प्रतिदिनं दृश्यमानानि पर्णानि तदा न दृष्टिगोचराणि जातानि। स: सर्वत्र हिण्डित्वा ''इमानि तानि पर्णानि स्यु:। अग्रिमानि वा स्यु:'' इति विचिन्तयन् आटत्। किन्तु सञ्जीवनी तु न लब्धा।

ग्रामवासिन: सर्वे तस्मै कुपिता:। स: अस्मान् अवञ्चयत् इति भावना तेषां मनसि उद्भूता, अत: स: तै: कोपेन ताडित:। सीतारामस्य मन: द्विधा पीडया अदूयत। एका तावत् ताडनपीडा, अपरा च अकस्मात् अदृश्यतां गता सञ्जीवनी च। वारं वारं जीर्णोद्याने भ्रान्त: स: परन्तु तानि उद्भूतानि पर्णानि न लब्धवान् एव।

वस्तुत: तस्य ग्रामप्रमुखस्य भाग्ये विधिना मरणमेव लिखितम् आसीत्, न तु जीवनम्। अत: पुरत: विद्यमानाम् अपि तां सञ्जीवनीं स: द्रष्टुं नैव अशक्नोत्, विधे: वचनं च अप्रमत्तं पूर्णतां गतम्।



# कच्छपचरितात् शिक्षा

अथ कदाचित् रङ्गनाथः तस्य मातुलेन सह समुद्रतटं गतः। तस्य मातुलः तत्र आगतं स्वमित्रं दृष्ट्वा तेनैव सह वार्तायां निरतः। केनचित् कालेन रङ्गनाथः तटे कश्चित् कच्छपम् अपश्यत्। यावत् महता कुतुहलेन सः कच्छपं निरीक्षते स्म, तावता एव कच्छपः स्वशिरः कोशे समहरत्। अधुना केवलं वक्राकारः चित्रपाषाणः इव तस्य कोशः दृश्यते स्म। तत्र कापि चेष्टा एव न आसीत्। रङ्गनाथः मुहूर्तं प्रतीक्षितवान्। सर्वथा निश्चलं कच्छपं विलोक्य सः खिन्नः अजायत। ततः सः समीपस्थया कयाचित् यष्ट्या तं नुन्नवान् 'तेन कच्छपः कोशात् स्वशिरः बहिः सारयेत्' इति बुद्ध्या। किन्तु कच्छपः तथापि नैव अचेष्टत। रङनाथस्य मातुलः दूरात् सर्वम् एतद् निरीक्ष्य तस्य समीपम् आगतः। रङ्गनाथः आवदत्, ''माम, आदौ मया अस्य कच्छपस्य शिरः दृष्टम्। अस्मिन् काचित् चेष्टा अपि विलोकिता। सत्यं वच्मि। किन्तु अधुना पश्य! कथं निश्चेष्टः तिष्ठति अयम्। मातुलः रङ्गनाथस्य हस्तात् यष्टिम् अपसार्य अवदत्, ''न एवं कार्यम्। यष्ट्या एवं नोदनेन वराकः अयं कच्छपः मरिष्यति'' इति। ''तर्हि किम् करवाणि?'', इति अपृच्छत् रङ्गनाथः। मातुलः शनकैः कच्छपम् उद्धृत्य गृहम् प्रति अनयत्। रङ्गनाथः आनन्देन कूर्दन् तम् अन्वसरत्। गृहाभ्यन्तरे कस्मिंश्चित् कोष्णे कोणे तम् अमुञ्चत्। ऊष्मणा तुष्टः सः कच्छपः मन्दं स्वशिरः कोशात् बहिः निष्कासितवान्। ''अहो दृश्यताम् एतत्'' इति आह्लादेन न्यगदत् रङ्गनाथः। ततः कच्छपस्य क्रियाः पश्यन् स्मयमान मातुलः अवदत्, ''मनुष्याः इव कच्छपाः अपि दुःशास्याः भवन्ति। अतः तेषु बलप्रयोगः न उचितः। तैः सह मैत्री सम्पादनीया। स्नेहेन आचरणीयम्। अवगतं किल? इति।

*- मन्त्रवादिमहेश्वरः*





# स्वर्णहस्तः

पुरा किल दक्षिणभारते कश्चन पाण्ड्यकुलोत्पन्नः राजा मदुरैनगरम् अधिशास्ति स्म। सः प्रजाः स्वपुत्राः इव परिपालयति स्म। सर्वदा सर्वेण सह न्यायसम्मतम् आचरणमेव करोति स्म अन्यायं च स्वराज्ये प्रतिपदं निरुणद्धि स्म। 'तस्य राज्यं रामराज्यम् इव' इत्येतत् कविभाटचारणैः स्वकाव्येषु बहुधा गीयते स्म।

यदि कोऽपि किमपि कष्टम् अनुभवति, तर्हि सा वार्ता गुप्तचरद्वारा राजानं प्रति गच्छति स्म। सः च यथाशक्ति तान् क्लेशान् निवारयति स्म। किञ्च सः स्वयं वेषान्तरं कृत्वा प्रजानां क्षेमकुशलं विजानाति स्म। अतः प्रजाहितपालनतत्परस्य तस्य राज्ये सर्वोऽपि जनः अत्यन्तं सुखेन निवसति स्म।

एकदा यदा रात्रौ राजा वेषान्तरं धृत्वा नगरे सञ्चरन् आसीत्, तदा रात्रौ दशवादने सः ब्राह्मणानां निवासस्थानं कमपि अग्रहारं प्राप्तवान्। यदा सः तस्य गृहस्य समीपम् आगच्छत्, तदा गृहाभ्यन्तरात् कस्यचित् रोदनस्य ध्वनिः, तथा च कस्यचित् पुरुषस्य सान्त्वनपरः रवः तस्य राज्ञः श्रुतिपथम् आयात्।

राजा तस्य गृहस्य पुरतः स्थित्वा तत्सम्भाषणम् श्रुण्वन् स्थितः। तस्मिन् गृहे एकः ब्राह्मणपरिवारः निवसति स्म। तस्य परिवारस्य सन्ततिः न आसीत्। अन्येद्युः एव तेन ब्राह्मणेन कार्यवशात् काशी गन्तव्या आसीत्। तस्य प्रत्यागमनपर्यन्तं एकाकिन्या स्थातव्यम् इति कल्पनया ब्राह्मणी रुदन्ती आसीत्।

"षण्मासानन्तरम् अमावस्यायाम् अहं

व्ही. रमादेवी

प्रत्यागमिष्यामि। षण्मासनिमित्तम् आवश्यकं जीविकासाधनं मया यथेष्टं गृहे स्थापितम् अस्ति। अतः त्वया दुःखं न कर्तव्यम्। न तथा किमपि महद्दुःखकारणं विद्यते। त्वया न किमपि कष्टं सोढव्यं भवेत्'', सः पतिः अवदत्।

अहमेतत् चिन्तयित्वा न रोदिमि, यत्खाद्यपेयादीनां काचित् समस्या भवेत्। अपि स्त्रियः मम षण्मासान् यावत् एकाकिन्याः गृहेऽस्मिन् वासः बहुकष्टकरः इति कृपया चिन्त्यताम्। माम् एकाकिनीम् अनाथाम् आलोक्य अजानत्याः मम कदाचित् चोराः बलात् गृहं प्रविशेयुः सर्वमपि धनं चोरयेयुः इति भयं मां बबाधते।

''अये मूढे! अस्माकं सर्वकष्टनिवारणाय अस्माकं राजा अलम् इत्येतत् तु तवापि विदितमेव। तस्मात् किमर्थं बिभेषि त्वम्? अपि त्वया कदापि अस्माकं राज्ये स्तेनैः गृहलुण्ठनस्य वार्ता श्रुता? किं त्वम् अनेन कारणेन बिभेषि, यत् यः राजा एतावतः बृहतः राज्यस्य रक्षादायित्वं निर्वहन् अस्ति, सः त्वां चौरात् न रक्षिष्यति? अधुना इदम् अकारणभयं त्यज'', सः पतिः अवदत्। ततः सः राजा तत् सम्भाषणं श्रुत्वा अग्रे अगच्छत्। अन्येद्युः च सः ब्राह्मणः काशीं गतः।

तस्यां रात्रौ राजा वेषान्तरं धृत्वा अग्रहारम् आगत्य तस्यां वीथ्यां ब्राह्मणस्य गृहस्य पुरतः आरात्रं रक्षकरूपेण स्थितः। तदनन्तरं सः प्रतिदिनं तत्र रक्षणकार्यं कर्तुम् आगमनम् आरभत। एवं कतिचन दिनानि अतीतानि, सप्ताहाः अतीताः, मासाश्च वीताः। अनेन क्रमेण



षाण्मासिककाल: अन्तं गत: अमावस्या च सन्निहिता। तस्मिन्दिवसेऽपि सः राजा तस्य अभ्यासानुसारं वेषान्तरं धृत्वा तत्र रक्षणार्थम् आगच्छत्।

यदा सः तस्य गृहस्य समीपं समागत: तदा कस्यस्वित् पुरुषस्य रवः तस्मात् गृहात् राज्ञः श्रुतिपथम् आगत:। तस्य गृहस्य स्वामिनः अनुपस्थित्यां कोऽपि परपुरुष: बलेन गृहं प्रविष्टवान् वा इत्येतत् द्रष्टुं सः गृहद्वारे अङ्गुल्या शब्दम् अकरोत्। परं यदा सः कपाटे वर्तमानेन च्छिद्रेण अन्त: अपश्यत्, तदा तेन दृष्टम्, यत् तस्य गृहस्य स्वामी सः ब्राह्मणः काशीतः प्रत्यागत: आसीत्। अध्वश्रमखिन्न: स: अधुना सुखेन पत्न्या सह उपविश्य च वार्तालापं कुर्वन् आसीत्।

तद्दृष्ट्वा सः राजा सम्भ्रान्तः अभवत्। रात्रौ अनुचिते काले तेन कृतं द्वारनोदनं तस्मै एव न अरोचत। सः अचिन्तयत्, यत् अधुना तस्य ब्राह्मणस्य एवं चिन्तनम् भवेत्, यत् तस्य अनुपस्थित्यां कोऽपि अपरिचितः प्रत्यहम् आगत्य कपाटे शब्दं करोति। एतं प्रमादं निवारयितुं सः तत् गृहं परितः वर्तमानानां सर्वेषाम् अपि गृहाणां द्वाराणि एवमेव नादमकरोत् पुनश्च अन्धकारे कुत्रचित् गतः।

द्वारि कपाटशब्दं कुर्वाण: क: तिष्ठति इति द्रष्टुं सर्वेऽपि गृहस्वामिन: गृहाद्बहिः आगताः। सर्वैः चिन्तितम्, यत् एतत् कस्यचित् चोरस्य एव कार्यम् अस्ति। यतः तेषां राज्ये एवं पूर्वं कदापि न प्रवृत्तम् आसीत्। अतः तैः सर्वैः राज्ञः आस्थानं गत्वा अस्मद्राज्ये प्रवर्तमाना: अभूतपूर्वघटना: प्रजापालकाय सहृदयाय



नृपाय निवेदनं कर्तुं निश्चयः कृतः।

अन्येद्युः ते सर्वेऽपि महाराजस्य राजसभायाम् उपस्थिताः अभवन्। "महाराज! वयम् अद्यावधि भवतां राज्ये चोरस्य भयम् अननुभूय अस्मद्रक्षाविषये भवति विश्वस्य निर्भीकाः भूत्वा सुखेन जीवन्तः आस्म। परं ह्यः रात्रौ अस्माकं वीथ्याम् एका घटना सञ्जाता। तया घटनया वयं सर्वेऽपि अतीव चिन्ताक्रान्ताः स्म, तथा च इयं भवतः कृते अपि अपकीर्तिः स्यात्। कोऽपि चौरः रात्रौ अस्माकं गृहद्वारेषु शब्दं कृत्वा पलायनम् अकरोत्। वयम् निवेदयामः, यत् भवान् तं चौरं धृत्वा तं दण्डयतु" इति।

तच्छ्रुत्वा राजा सपदि अमात्यं प्रति मुखं परिवर्त्य अपृच्छत्, "यः इमम् अपराधं करोति, तस्य कृते किं दण्डनम् अस्ति?" ते नगरवासिनः अवदन्, "येन एतत् भयं जनितं, तस्य वामहस्तः छेत्तव्यः। इदम् एव दण्डनं भवतु अस्य अपराधस्य कृते।" नगरवासिनां वचनं श्रुत्वा अमात्यः अपि स्वसम्मतिं प्राकटयत्।

सहसा तेन राज्ञा खड्गं गृहीत्वा वामः हस्तः कफोण्यां छिन्नः, सर्वेषां समक्षं च सर्वमपि वृत्तं कथितम्। एतच्छ्रुत्वा सर्वैः दुःखं प्रकटितवन्तः। न्यायप्रियस्य भूपस्य सदाचरणस्य प्रमाणं प्राप्य भूरिप्रशंसा कृतवन्तः।

अनन्तरं तैः प्रजाजनैः एकं स्वर्णहस्तं निर्माय राज्ञः कफोण्यां योजितः। ततः सर्वैः सुन्दरेश्वरस्वामिनः मन्दिरं गतं, नृपस्य वैगुण्यदूरीकरणार्थम् आराधना च कृता। पाण्ड्यराजस्य सत्त्वेन प्रजानां स्वभूपतौ निरतिशयप्रीत्या च भगवान् सुप्रसन्नः अभवत्। तस्य कृपाप्रसादेन राज्ञः हस्तः पुनः यथापूर्वम् अभवत्।

प्रजाभिः प्रेमादराभ्याम् आरोपितस्य चकासतः तस्य सुवर्णहस्तस्य कारणेन सः राजा 'सुवर्णहस्तपाण्ड्यः' इति नाम्ना ख्यातिम् अलभत।





# अनृतवादिनः सत्यभाषणम्

कमलपुरे निवसतः वीरभद्रस्य पिता तस्य बाल्यकाले एव दिवङ्गतः। तत्पश्चात् वीरभद्रस्य मातरि एव तस्य पालनस्य भारः आपतितः। तया धैर्यवत्या मात्रा परम्पराप्राप्ते लघुक्षेत्रे सस्यानि उत्पाद्य एकाकिन्या एव वीरभद्रः पालितः। अननुभूतपितृस्नेहं वीरभद्रं सा बहु अलालयत्। तस्याः निस्सीमलालनकारणात् वीरभद्रः अनुशासनहीनः सन् अध्ययनात् विरक्तः अभवत्। मित्रैः सह क्रीडायामेव स्वच्छन्दतया सः सर्वमपि समयं गमयति स्म। युवावस्थां प्राप्तवान् अपि सः क्षेत्रे कृषिकर्मणि मातुः साहाय्यं विदधातुं नोत्सहत।

अथैकदा तस्य माता तस्मै अवदत्, "वत्स! वृद्धाहं पूर्ववत् क्षेत्रे कार्यं कर्तुं न शक्नोमि। इतः परं त्वया एव कृषिकार्यस्य भारः उह्यते चेत् वरम्।"

तेन वचनश्रवणेनापि त्रस्तः वीरभद्रः जुगुप्सया अवदत्, "क्षेत्रे कर्षणादिकं कुर्वन् बलीवर्दैः सह पङ्के निमग्नो भवितुं नोत्सहेऽहम्। अहं क्षेत्रे कार्यं सुतरां न करिष्यामि।"

आ बाल्यात् लीलया असत्यभाषणमिति वीरभद्रस्य कश्चन दुर्गुणः युवावस्थां यावत् अनुवृत्तः। सहजतया अनृतभाषणं तस्य अभ्यस्तम् आसीत्। यदा सः कार्यार्थं नगरान्तरं गच्छति स्म, तदा आत्मानं कदाचित् भिषग्रूपेण परिचाययति स्म। क्वचित् स्वस्य 'अहं विधिज्ञः' इति परिचयं वदति स्म। अथ वा कुत्रचित् 'अहं प्राप्तयशाः वणिगस्मि' इति जनेभ्यः कथयति स्म। तथाकथितपरिचयानुगुणं सः सकौशलम् आचरति स्म। तेन जनाः अपि तस्मिन् विश्वसन्ति स्म।

परिणामतः एकदा तस्य छद्मपरिचयेन वञ्चितः कश्चन रोगी वीरभद्रनामकं वैद्यम् मेलितुकामः कमलपुरम् आगच्छत्। पुनः कदाचित् कश्चन जनः वीरभद्रनामानं विधिज्ञं

तिरुमलश्रीः

द्रष्टुकामः कमलपुरम् आयात् वञ्चनां च अन्वभवत्। शनैः शनैः कमलपुरवासिनः ईदृशप्रसङ्गवशात् वीरभद्रस्य अनृतवादित्वं सप्रमाणम् अवागच्छन्।

अथैकदा ग्रामणीः वीरभद्रं मेलितुम् आह्वयत्। सः तस्मै अवोचत्, ''नान्येषु कर्मसु कुशलः त्वं असत्यभाषणे पारङ्गतोऽसि इति दृश्यते। विश्वासपात्रम् असत्यभाषणमपि काचन कला, कष्टसाध्यं हि तत्। तवैनाम् अनृतभाषणपरां नित्यप्रवृत्तिं व्यवसायरूपेण परिवर्त्य सम्यक् धनार्जनं कर्तुं शक्नोषि।''

तदाकर्ण्य वीरभद्रः चकितः अभवत्। तदा ग्रामणीः तस्मै स्वमनोगतम् अकथयत्। ग्रामण्यः जामाता गोपालः नगरे प्रथितयशाः विधिज्ञः आसीत्। सः वीरभद्रं कार्ये नियोक्ष्यति इति ग्रामण्या उक्तम्। वीरभद्रः तदङ्गीकृतवान्।

श्वशुरस्य अनुमोदनपत्रं स्वीकृत्य आगतवते वीरभद्राय गोपालः हार्दं स्वागतं व्याहरत्। ''मम व्यवसाये त्वं साहाय्यकारी भवितुम् अर्हसि। यदि त्वं मम वचनानुगुणम् आचरिष्यसि, तर्हि भूरिधनम् अर्जयितुं शक्ष्यसि'', सः अवदत्। वीरभद्रः तस्य वचनं सहर्षम् उररीकृतवान्।

गोपालः कदाचित् न्यायलये विचाराधीनम् अभियोगं तस्य पक्ष्यस्य अनुकूलं कर्तुं छद्मसाक्षिणं प्रयुङ्क्ते स्म। सः स्वभावतः असत्यभाषिणं वीरभद्रं नैकेषु अभियोगेषु वेशान्तरं नामान्तरं च धारयित्वा छद्मसाक्षिरूपेण योजितवान्। ततः सः वीरभद्राय कार्यानुरूपं वेतनं ददाति स्म।



पूर्वमेव असत्यभाषणे अभ्यस्तः वीरभद्रः इदानीं मनोविनोदार्थम् अलीकभाषणस्य स्थाने तां नित्यप्रवृत्तिं वृत्तिरूपेण उपयुञ्जन् आसीत्। एवमेव कश्चन कालः अतीतः।

अथैकदा सः ग्रामे मातरं द्रष्टुं गतः ततः नगरं प्रत्यागच्छति स्म। अध्वश्रमखिन्नः सः विश्रान्त्यर्थं मार्गे विद्यमानम् उपाहारगृहं प्राविशत्। तत्र पूर्वमेव कौचित् वृद्धदम्पती आस्ताम्। मूर्तिमत् दारिद्र्यमिव तौ दृश्येते स्म। तयोः पुत्रः निरपराधी अपि अन्यायेवशात् कारागारे बद्धः वर्तते इति सः अजानात्। दम्पत्योः पुत्रस्य अभियोगः परेद्युरेव न्यायालये प्रस्तोष्यते इत्यपि सः ज्ञातवान्। यदि अयम् एकमात्रपुत्रः दण्डं प्राप्नुयात्, तर्हि तौ वृद्धदम्पती निराधारौ भवेताम् इत्येतत्तु स्पष्टमेवासीत्। तेन तौ नितरां चिन्ताग्रस्तौ आस्ताम्। अतः तौ



आत्महननार्थम् उद्युक्तौ आस्ताम्। परं मरणात्प्राक् अन्तिमवारं पुत्रदर्शनाकाङ्क्षिणौ तौ पद्भ्यामेव नगरं प्रति प्रस्थितौ।

वीरभद्रस्य हृद्यं तयोः विपत्कारणात् द्रवीभूतम्। ''भयं मास्तु! ईश्वरः युवां रक्षेत्। आशां मा त्यजतम्!'', इति वीरभद्रः तौ समाश्वासयत्। ततः सः ताभ्यां नगरमार्गं प्रदर्शयन् ताभ्यां सहैव नगरम् आयातः।

अग्रिमदिवसे यदा सः न्यायालयम् अगच्छत्, तदा तेन तत्र पूर्वेद्युः दृष्टौ वृद्धदम्पती अवलोकितौ। ''आवयोः पुत्रस्य अभियोगः साम्प्रतं प्रचलति'' इति तौ वीरभद्राय अकथयतां न्यायालये स्थितम् आरोपिणं प्रति च अङ्गुलिनिर्देशम् अकुरुताम्। वीरभद्रः तम् आरोपिणं दृष्ट्वा चकितः अभवत्। आरोपी कश्चन आविंशतिवर्षीयः युवा आसीत्। तं दृष्ट्वा वीरभद्रस्य स्मृतिचक्रं वेगेन पर्यभ्रमत्, कश्चन प्रसङ्गश्च तस्य स्मृतिपथम् आयातः।

वीरभद्रः पार्श्वस्थं ग्रामं कार्यार्थं गतवान् आसीत्। यदा सः ग्रामसीमानं प्राप्नोत्, तदा सायङ्कालः आसन्नः सर्वत्र निबिडान्धकारश्च प्रसृतः। तावता एव महती वृष्टिः आरब्धा। वीरभद्रः समीपस्थं मन्दिरं समाश्रयत। तदा तस्य ग्रामस्य ग्रामाधिकारी, मन्दिरे वर्तमानः अर्चकश्च द्वावपि ऐकमत्येन देवताविग्रहे विद्यमानानि आभूषणानि अचोरयताम्। न्यायलये अभियुक्तः युवकः ग्रामरक्षकरूपेण कार्यरतः मार्गे चौर्यशङ्कया तौ अरुणत्। परं अन्धकारे यावत् सः तौ अभिज्ञातुं प्रयतमानः आसीत्, तावत् तौ द्वावपि तम् आक्रम्य 'अनेन देवताभूषणानि चोरितानि' इति तस्मिन् आरोप्य तं देवालयप्राङ्गणे ध्वजस्तम्भे अबध्नाताम्। ततः तौ कानिचन आभरणानि युवकस्य कोषे संस्थाप्य अन्यानि देवालये मूर्तेः अधः बिले अस्थापयताम्।

एतस्य सर्वस्यापि प्रसङ्गस्य प्रत्यक्षसाक्षी वीरभद्रः 'अहमपि चौर्येऽस्मिन् वृथा निवेशितः भविष्यामि' इति विचिन्त्य ततः सत्वरं निर्गतः। इदानीं वीरभद्रेण तस्यैव युवकस्य विरुद्धपक्षोपकाराय छद्मसाक्षिरूपेण व्यवहर्तव्यम् आसीत्।

आरोपी युवकः आत्मनि आरोपितं चौर्यं निराकुर्वन् ग्रामाधिकारिणम् अर्चकं च वास्तविकचोररूपेण प्रत्यपादयत्। ताभ्यां द्वाभ्यामपि स्वरक्षार्थं विधिज्ञस्य गोपालस्यैव

साहाय्यं गृहीतम् आसीत्।

गोपाल: वीरभद्राय अकथयत्, "त्वया तस्यां रात्रौ देवालय: शरणार्थं गत:। आभूषणानि चोरयित्वा मन्दिरात् बहिरागच्छन्तं युवकं ग्रामाधिकारी अर्चकश्च गृहीतवन्तौ इति साक्षिरूपेण कथनीयम्।" स: वीरभद्राय असत्यभाषणार्थं पूर्वतनधनस्य अपेक्षया अधिकं धनं दास्यति इत्यपि गोपालेन उक्तम्। वीरभद्र: न्यायालये न्यायाधीशं पुरत: साक्षिरूपेण आहूत:। वीरभद्र: सकृत् आरोपिणि, तस्य पित्रो:, ग्रामाधिकारिणि, अर्चके गोपाले च दृष्टिक्षेपम् अकरोत्। तत: स: भगवद्गीतां स्पृष्ट्वा सत्यकथनं प्रतिश्रुत्य स्वभाषणं समारभत। तस्यां रात्रौ तेन यत्किमपि दृष्टं, तत् स: सर्वं यथावत् विवृतवान्। तस्य सत्यकथनेन अर्चक: ग्रामाधिकारी च लज्जया अवनतशिरस्कौ अभवताम्। न्यायाध्यक्ष: वीरभद्रस्य साक्षिवचनं लेखार्पितम् अकरोत्, आभूषणानां पुन:प्राप्त्यर्थं सैनिकै: अनुगम्यमानान् न्यायाधिकारिण: चौर्यस्थलं प्रैषयत्। सत्ये प्राकाश्यं गते आरोपी कारागारात् मोचित:। ग्रामाधिकारी अर्चकश्च बन्दिग्राहं गृहीतौ। युवकस्य पितरौ तौ वृद्धदम्पती कृतज्ञतया तस्य पादयो: पतितुकामौ वीरभद्रेन स्वपादस्पर्शात् निवारितौ, सन्तोषेण स्वग्रामं प्रतियातुम् आपृष्टौ च।

अस्या: घटनाया: अनन्तरं गोपालस्य कोपभागपि वीरभद्र: किञ्चित् आन्तरिकं समाधानम् अन्वभवत्। सकृत् सत्यभाषणेन स: एतावन्तं सन्तोषम् अनुभवति इत्येतत् स: असत्यभाषणात् विरन्तुं दृढनिश्चयम् अकरोत्। तेन स: गोपालाय स्वमुखम् अपि दर्शयितुं न शक्नुयात् स्वजीविकां च नाशयेत् इत्यपि स: जानाति स्म। परं जीवनार्थं धनार्जनं कर्तुम् असत्यभाषणमिति नैव एकमात्रोपाय: इति स: अजानात्। तस्य वृद्धमातरं प्रत्यागत्य तां सेवमान: क्षेत्रे कृषिकार्यं स: जीविकारूपेण निश्चितवान्।





# अमृतम्

सिद्धमपल्ले: भूस्वामिन: गृहे आनन्दोत्सव: समपद्यत, यत: तस्य पुत्र: जात:। तद्दिवसे एव तस्य क्षेत्रस्य समीपस्थे उटजे निवसत: कृषकस्य गृहे अपि पुत्र: अजायत। तदनन्तरं पञ्च वर्षाणि अतीतानि। भूस्वामिन: पुत्र: विविधानि स्वादिष्ठानि पक्वान्नानि खादति स्म । अतिस्नेहेन स: लालित: पालितश्च। तस्य संवर्धने कापि न्यूनता न भवेत् इति भूस्वामिना आदिष्टम् । तथापि अतीव दुर्बल: स: अस्वस्थ: भवति स्म। भूस्वामिना नैके वैद्या: आहूता: तस्य निरीक्षणं च कारितम् । रक्ते लोहस्य अभाव: एव तस्य दुर्बलताया: एकमेव कारणमिति वैद्यै: उक्तम् । विकारपरिहाराय कृतेष्वपि योग्येषु उपचारेषु बालकस्य स्वास्थ्यलाभ: न जात:, नापि शरीरं पुष्टिं प्राप्नोत्। समवयस्का: बालका: इव स: न च प्रसन्न: उत्साहपूर्णो वा अवर्तत।

एकस्मिन् दिवसे भूस्वामी स्वपुत्रं विहारार्थं क्षेत्रं प्रति नीतवान् । तत्र स: पुत्रेण सह क्रीडन्तं कृषकं दृष्टवान् । भूस्वामिन: पुत्र: अपि तत्स्वभावविरुद्धं कृषकपुत्रेण सह इतस्तत: धावन् हसन् च क्रीडितवान्। तदा स: कृषीवल: एकस्मिन् मृत्पात्रे किमपि द्रवपदार्थम् आनीय स्वपुत्रम् अपाययत्। तेन पुत्रेणापि सानन्दं तत् पीत्वा पुन: क्रीडनम् आरब्धम्। स: बालक: स्वस्थ:, अनलस: उत्साही च अवर्तत।

भूस्वामिना सकुतूहलं कृषक: पृष्ट:, ''किमेतत्?'' कृषीवल: विहस्य अब्रवीत्, ''तदेव अमृतं, यत् मम पूर्वजा: अपि पीतवन्त:।''

गच्छता कालेन कृषकपुत्र: शक्त्या वर्धमान: दृढकाय, उत्साहवान् च सञ्जात:, परन्तु भूस्वामिन: तनय: पूर्ववत् सत्त्वहीन: अतिष्ठत्। भूस्वामिना एतत् लक्षितम्। अन्तत: अनुभूयमानां अमृतजिज्ञासां

पी. व्ही. सत्यनारायण:

नियन्तुम् अक्षमः सः कृषकस्य गृहं गत्वा तम् प्रार्थयत्, ''कृपया तव पुत्रेण पीयमानं किञ्चित् अमृतं मम पुत्रायापि यच्छ। कियतापि धनेन अहं तत् क्रेतुं सिद्धः।''

कृषकः ससङ्कोचं तम् अवदत्, ''धनेन क्रयणस्य वार्ता तिष्ठतु नाम। किन्तु भवत्सदृशेभ्यः धनिकेभ्यः तत् रोचिष्यते वा न इत्यत्र अहं शङ्के।''

''निश्चयेन रोचिष्यते। मम दृष्ट्या मम पुत्रस्य स्वास्थ्यं सुखं च महत्त्वं भजतः'', इति तेन प्रत्युत्तरं दत्तम्।

''एवं चेत् कृपया अन्तः आगच्छतु'', इत्युक्त्वा कृषकः भूस्वामिनं गृहाभ्यन्तरं नीतवान्। तत्र चुल्लिकायां यवागूः पच्यमाना आसीत्। सविनयं सः उक्तवान्, ''स्वामिन्, एतदेव निर्धनस्य मे अमृतम्। परम्परागतम् एतस्य सेवनं वयं कुर्मः। इयं यवागूः रक्ते लोहस्य मात्रां वर्धयित्वा वर्धमानान् बालान् अथ च प्रौढान् सशक्तान् करोति। एतत् अस्माकं बालस्वामिने दत्त्वा 'तस्मै रोचते वा' इति पश्यतु।''

तावता कृषकपुत्रेण पूर्वमेव सा यवागूः कस्मिंश्चित् शरावे संस्थाप्य भूस्वामिपुत्राय दत्ता। गृहे तु सः भूस्वामिपुत्रः उत्तमम् अन्नमपि निराकरोति स्म। अत्र तु तेन विना आक्षेपं यवागूः निःशेषं पीता। तेन भूस्वामी विस्मितः जातः।

मासाभ्यन्तरे सः स्वपुत्रं कृषकपुत्रः इव सशक्तम् उत्साहिनं च दृष्टवान्। तदा सः चिन्तितवान्, ''अहो दिव्यमिदम् अमृतम्'' इति। तदैव स्वप्रासादे जिह्वालौल्यकरान् महार्घान् पदार्थान् परित्यज्य शुद्धं सात्त्विकं स्वास्थ्यकरम् अन्नमेव सेवनीयम् इति तेन निर्णीतम्।

तथैव सः स्वपुत्रं गृहात् बहिः अन्यैः बालैः सह क्रीडितुं प्रोदसाहयत्। किं पुनः वक्तव्यम्? ततः प्रभृति तस्य पुत्रः सात्त्विकाहारेण समवयस्कैः मित्रैः सह मुक्ताङ्गणे शुद्धवायौ क्रीडनेन च स्वस्थः प्रफुल्लितः च जातः।



# गीतस्य कथा

एकदा अकस्मात् भूमौ सर्वत्र दुर्भिक्षं सञ्जातम्। करुणासिन्धुः ईश्वरः मरणोन्मुखान् जनान् दृष्ट्वा चिन्ताकुलः अभवत्। ''सर्वविधानि नैसर्गिकसाधनानि पृथिव्यां सन्ति। जनाः अपि सक्षमाः सुसन्नद्धाः सन्ति। एषा भूमिः सर्वसस्याढ्या उर्वरा एव। तथापि कुतः इदं दुर्भिक्षं प्रवर्तते?'', इति चिन्तितवान् सः एकं देवदूतम् 'एतस्याः परिस्थितेः कारणं किम्' इति ज्ञातुं प्रैषयत्। सः अपि सर्वं वृत्तं विज्ञाय ''हे भगवन्! दुर्भिक्षस्य कारणं मानुष्याणां कार्ये नैरस्यमेव अस्य । मनुष्याणां स्वभावोऽयं, यत् ते क्रियमाणे शीघ्रमेव नैरस्यम् अनुभवन्ति। समानं कार्यं वारं वारं कुर्वाणाः ते नातिचिरकालेन तस्मात् विरक्ताः भवन्ति। अतः सातत्येन कृषिकार्ये अपि नीरसताम् अनुभूय तत् कार्यं त्यक्त्वा अन्यकार्ये रुचिं दर्शितवन्तः'', इति विवरणं अददात्। ''यदि मानवाः नैरस्यभावं परित्यज्य सोत्साहं कृषिकर्म न कुर्युः, तर्हि सर्वा अपि मनुष्यजातिः प्राणहरे सङ्कटे निमग्ना भवेत्,'' इत्यवदत् देवदूतः।

ईश्वरः हसन् तं प्रत्यवदत्, ''आम्, सत्यमेवेदं ते कथनम्। अयमेव कालः जगति अस्मिन् गीतस्य जननार्थम् उचितः। इतःपरं यदा जनाः कार्यस्य आरम्भं करिष्यन्ति, तदा तेषां मुखे गीतस्य आरम्भः भविष्यति। गीतं तालम् अनुसृत्य भवति। तं तालम् अनुसृत्य तेषां पादानां चलनं भविष्यति। गीतं, कार्यं च द्वयमपि युगपत् परस्परम् उपकारके भूत्वा जनानां नैरस्यं परिहरिष्यतः'', इति ईश्वरः उक्तवान्। ''किन्तु गीतं गायं गायं जनाः नीरसताम् अनुभवन्ति चेत्?'' इति देवदूतः पृष्टवान्। ''तदेव गीतस्य गीतत्वम्। गीतेन नीरसता न जायेत इत्यतः गीतमहं आशीर्वचोभिः अनुगृह्णामि'', ईश्वरः अवदत्। तदारभ्य कृषकाणां कर्मकराणां नीरसतानिवारणस्य तत् किञ्चन उत्तमं साधनं जातम्। गीततालयोः अविच्छेद्यसम्बन्धः। अतः अद्यापि गीतस्य श्रवणमात्रेण स्वाभाविकतया एव तालानुगुणं पदन्यासं कुर्वन्तः वयं नैरस्यात् मुक्ततां प्राप्नुमः। *- पी. वेङ्कटेश्वरराव:*





# शिथिलालयः - ३१

*(द्वन्द्वे वृश्चिकनेता शिखिमुखिनः परिजितः तस्य दास्यत्वं च अङ्गीकृतवान्। शिखिमुखी तस्य दुर्वतनम् अक्षमत तस्मै अभयं च प्रादर्शयत्। ततः सर्वे दर्याम् अवतीर्णाः। सर्वैः समेत्य तत्रस्थः वनगजयूथः प्रद्रावितः। वृक्षशाखासु दृश्यमाना मानवाकृतिः नाम नागसोमो वा इति जाङ्गलः अशङ्कत। सः सपद्येव वृक्षं समारोहत्। ततः परं ...)*

**वृ**क्षमूले स्थितं शिखिमुखिनः दलं वृक्षं समारूढवतः, तच्छाखागतां मानवाकृतिं नागसोमबुद्ध्या दिदृक्षोः जाङ्गलस्य मुखात् सत्यस्थितिं ज्ञातुं समुत्सुकम् आसीत्। वृक्षे मध्येशाखापर्णसम्भारं वर्तमानः जाङ्गलः उच्चैः अवदत्, ''शिखिस्वामिन्, अयं नागसोम एव। निसञ्ज्ञस्यापि अस्य श्वासोच्छ्वासौ प्रचलतः। तेनायं जीवतीति अनुमीयते। द्वित्राः जनाः मम साहाय्यार्थं वृक्षमारोहन्तु, येन एतस्य अधः अवतारणं शक्येत'', इति।

तदाकर्ण्य वृश्चिकजातीयौ युवकौ झटिति वृक्षम् आरोहताम्। तैः दृढाभिः लताभिः नागसोमः सुबद्धः वृक्षादधश्च अवतारितः।

शिखिमुखिविक्रमके सरिभ्यां जीवनशङ्कया निश्चेष्टस्य हृद्गत्यादिकं सर्वं परीक्षितम्। अत्रान्तरे वृश्चिकनेता पार्श्वस्थगुल्मेभ्यः काञ्चन औषधिम् आनयत्। तां च पीडयित्वा तद्रसं सः नागसोमस्य नासापुटे निरमोचत्। अनुक्षणं नागसोमः क्षुवन् सञ्ज्ञां प्राप्नोत् उदतिष्ठच्च।

''नागसोम! त्वं पर्वतशिखरात् अस्यां दर्यां वृक्षशाखासु न्यपतः, तथापि न कयापि क्षत्या ग्रस्तोऽसि, इत्यनेन

दासरि सुब्रमण्यम्




महदानन्दम् अनुभवामः'', शिखिमुखी मुदा अवदत्।

नागसोमः उन्मत्तवत् परितः सकृत् दृष्टिं क्षिप्त्वा ''पश्यत! स एव शिथिलालयः! तत्रैव शिथिलालयः वर्तते!'', इत्याक्रोश्य वृक्षान् प्रति प्रधावितुम् उद्युक्तः आसीत्। तावदेव शिखिमुखी हस्ताभ्यां तस्य कटिम् आलिङ्ग्य तं बलात् अधः उपावेशयत्, विक्रमाय अवदत्, ''विक्रम! अद्यापि उन्मत्तखदिरफलसेवनस्य अस्मिन् वर्तमानः प्रभावः नापगतः इति भाति। किं कर्तव्यम्?''

तदा किमपि वक्तुकामे विक्रमे ''त्रात! रक्षत माम्'' इति करुणरवः तेषां श्रुतिपथम् आगतः।

सर्वेऽपि रवस्य दिशि अपश्यन्। रक्तशुनकोऽपि उच्चैः अबुक्कत्। शिखिमुखी साश्चर्यम् अगदत्, ''किमिदं पिशाचानां ध्वनिः, आहोस्वित् तस्य शिथिलालयार्चकस्य शब्दः?'' ततः सः असिकोषात् खड्गम् आकृष्य तस्य आर्तशब्दस्य दिशि वेगेन अधावत्।

महावटवृक्षस्य च्छायायाः बहिः सूर्यातपे आगत्य शिखिमुखी शब्ददिशि पुनरपि सावधानम् अपश्यत्। तदा पुनरपि ''परित्रायतां परित्रायताम्'' इति आर्तध्वनिः तेन श्रुतः। साक्षान्मृत्युना कवलीक्रियमाणस्य अनन्यगतिकतया प्राणरक्षणार्थं याचमानस्य मुखान्निसरन्निव सः शब्दः लक्ष्यते स्म।

''विक्रम, अयं हि शब्दः शिथिलालयार्चकस्यैव। नाहमत्र लेशमात्रमपि शङ्के। सः सत्यमेव आपन्निमग्नः इति दृश्यते'', शिखिमुखी अवदत्।

तदा प्रतिवक्तुकामे विक्रमे रक्तशुनकः तत्सम्मुखस्थगुल्मेषु उदपतत्, उच्चैश्चाभषत्। सर्वेऽपि तमनु गुल्मान् अतिक्रम्य प्रायान्। तत्र यद्दृश्यं तेषां दृष्टिगोचरम् अभवत्, तेन तेषु भयाश्चर्ययोः आघात इव सञ्जातः।

कश्चन दीर्घकायः अजगरः शिथिलालयार्चकं प्रायः जानुनी यावत् न्यगलत्। तन्मुखनिविष्टपादः अर्चकश्च हस्ताभ्यां भूमौ वर्तमानं किमपि वस्तु

धृत्वा वेदनया पीड्यमान: भयकम्पितश्च लुठति स्म।

''यद्यपि अयम् अर्चक: नीचस्वभाव:, तथापि अस्य एतास्तात् भङ्करसर्पात् रक्षणमेव आर्यपुरुषसदृशकर्म'', इत्युक्त्वा शिखिमुखी खड्गहस्तो भूत्वा अजगरम् आक्रामत् तं पृष्ठे च प्राहरत्। क्षतिग्रस्तो जात: अजगर: वेदनया अताम्यत्, कराले मुखे गृह्यमाणम् अर्चकं च वक्रपाशात् उदसृजत्। अनुक्षणं शिखिमुखिन: अनुयायिन: वृश्चिकजातीयाश्च तमजगरं स्वायुधै: भृशं सन्ताडयन्।

शिखिमुखी विक्रमकेसरी च अजगरान्मुक्तस्य अर्चकस्य समीपम् अगच्छताम्। सर्पेण आजानुनिगलनात् तस्य पादयो: रक्तं नि:सरति स्म।

तस्य पादयो: बाह्याकृति: सर्वथा परिवृत्ता आसीत्। त्वचा विलग्नौ तौ मांसखण्डाविव रक्तौ दर्शनेन जुगुप्साम् उत्पादयत: स्म। वेदनां असहमान: अर्चक: जलं विना मत्स्य इव वेपते स्म। तथापि तेन हस्ताभ्यां किञ्चन वस्तु दृढं गृहीतमासीत्।

शिखिमुखी नत्वा तम् उत्थापयितुम् ऐच्छत्, तदा शिथिलालयार्चक: अवदत्, ''शिखिन् अहम् अत्रेव म्रिये। मां मोत्थापय। मरणात्प्राक् मया शिथिलालयस्य स्थानं ज्ञातमस्ति। मम मन्त्रशक्त्या: शिथिलेश्वर्यां विद्यमानाया: मम भक्त्या: फलमिदम्।''

''किं त्वं सत्यमेव शिथिलालयस्य स्थानम् अजानी:। कुत्रास्ति शिथिलालय:? अथ वा मरणात्पूर्वमपि त्वम् अनृतं भाषसे?'', शिखिमुखी



क्रोधेन अर्चकम् अपृच्छत्।

शिखिनः कोपपूर्णं वचनं श्रुत्वा अर्चकः स्वशिरः उत्थ्याप्य तीक्ष्णदृष्ट्या क्षणं यावत् शिखिनः नेत्रयोः अपश्यत्। ततः अवदत्, "तव मत्या अहं दुष्टः, वञ्चकः खलु। परं शिथिलालयेश्वरीं सन्तोषयितुं मया त्वसदृशाः केचन मानवाः पीडिताः। तत्र न कमपि दोषं पश्याम्यहम्। यदि त्वं मम वचने न विश्वसिषि, तर्हि पश्यैनं शिथिलालयस्य गोपुरकलशम्!", इत्युक्त्वा अर्चकः भूमिस्थवस्तुनः स्वहस्तौ अपाकरोत्। ततः पूर्वं शिखिविक्रमाभ्यां अर्चकेण हस्ताभ्यां आवृत्तं वस्तु द्रष्टुं न पारितम्। इदानीं अर्चकेण हस्तयोः दूरीकृतयोः सूर्यप्रकाशे चकासन् नेत्रदीपकतेजसा विलसन् गोपुरकलशः तयोः गोचरीभूतः। आश्चर्यावेगेन आविष्टाविव तौ अवाचौ सञ्जातौ। वृश्चिकजातीयास्तु कलशं दृष्ट्वा भूमौ निपत्य शिरसा प्राणमन्।

ततः क्षणं यावत्सर्वत्र शान्तता प्रसृता। 'अप्येतत् अर्चकस्य किश्चन इन्द्रजालं वर्तते' इति शिखिमुखी अशङ्कत। विक्रमकेसरी सहसैव किञ्चिद्विचिन्त्य अग्रे असरत्, हस्ताभ्यां च कलशं गृहीत्वा बलात् तम् उत्थापयितुं सः प्रायतत। परं कलशः स्वस्थानात् ईषदपि नाचलत्।

विक्रमकेसरिणः कलशोद्धारणस्य निष्फलं प्रयन्तं दृष्ट्वा आसन्नमरणोऽपि




शिथिलालयार्चकः प्रोच्चैः अहसत्, "तात विक्रम! अयं कलशः भूमौ स्थापितः लीलया स्वस्थानात् उद्धर्तुं शक्यते इत् मन्यसे किम्? शृणु तावत्, अहं ते सत्यं कथयामि। अहं तव पितामहं परिचिनोमि। यथा सः हठेन आचरति स्म, तथैव तवापि स्वभावः वर्तते।"

"अर्चक, कस्मात् कथयसि त्वं, यत् शिथिलालयस्य गोपुरकलशः भूगर्भं प्रविष्टः", शिखिमुखी अपृच्छत्।

"नैकेभ्यः वर्षेभ्यः पूर्वं अत्र महान् भूकम्पः अजायत। तेन नैसर्गिकप्रकोपेण मन्दिरमिदं भूगर्भे अवसन्नम्। परितः वर्तमानायाः पर्वतराजेः मन्दिरे निपतितैः शिलाखण्डैः मन्दिरमिदम् आच्छादितम्। तान् शिलाखण्डान् यूयं दूरीकुरुथश्चेत् शिथिलालयं तस्मिन् विद्यमानां




शिथिलेश्वरीं च द्रष्टुं शक्नुथ:। परं शिखिन्! युष्माकं शबरजातीयानां तया देव्या किं प्रयोजनम्? यूयं तु मन्दिरे प्राप्स्यमानं सुवर्णमेव इच्छथ: खलु?'' अर्चक: त्वेषेण अवदत्।

शिखिमुखी विक्रमकेसरिणं प्रति अपश्यत्। मरणात्प्राक् अर्चक: इभ्यजातीयेषु वृश्चिकजातीयेषु च शबरजातीयं शिखिमुखिनं प्रति रोषं जनयितुं प्रयतते इति तौ उदप्रेक्षेताम्। 'एतस्य दुष्टार्चकस्य का गति: करणीया' इति चिन्तायां मग्नयो: तयो: नागसोम: शनै: पदमनुपदं निधाय कलशम् उपासर्पत् तं चास्पृशत्। अनुक्षणं तस्य शरीरे काचन विनूतनशक्ति: प्रविष्टा इत्यदृश्यत।

नागसोम: दीर्घं निश्वस्य अवदत्, ''विक्रमस्वामिन्! अधुना अहम् उन्मत्तखदिरफलसेवनस्य प्रभावात् मुक्तोऽस्मि। अयं हि कलश: अद्भुत:। नि:सन्देहम् अस्य अध: मन्दिरं वर्तते। वयं एतान् शिलाखण्डान् अपसारयाम:।''

''इदं कार्यं तु महाकठिनम् इति प्रतिभाति। तथापि अस्माभि: कर्तव्यमेव। किं मन्यसे त्वं, शिखिमुखिन्?'' विक्रम: अपृच्छत्।

''यद्यपि एतत्कार्यं न सरलं, तथापि तदस्माभि: करणीयमेव। स्वदेशात् एतावद्भूमिं यावत् दूरं समागता: वयं शिथिलालयम् अप्रविश्य कथं वा प्रत्यागन्तुम् अर्हाम:? किं तव मृतपितामहस्य उत्तमां गतिं न कामयामहे वयम्? किं तव पितु: आज्ञा न पालनीया अस्माभि:?'', इत्युक्त्वा शिखिमुखी पुन: नीचस्वरेण विक्रमम् अपृच्छत्, ''अन्यच्च एनम् अर्चकं कथं नियन्तुं शक्नुम:? एष: स्वजातीयान् अस्मद्विरोधजननार्थं प्रचोदयति।''

नागसोम: प्राय: शिखिमुखिन: इङ्गितम् अवागच्छत्। स्मयमान: स: समीपम् आगत्य निभृतम् अवदत्, ''अस्य अर्चकस्य पादद्वयमपि अजगरस्य घोरवक्त्रे दलितम्। वातप्रकोपेण अयं स्वमेव म्रियेत। तस्य वचने अवधानं न कर्तव्यम्। अयं हि शिथिलालयस्यैव कलश: इत्यत्र नैव विद्यते शङ्कालेशोऽपि मे मनसि।''

''यदि वयं पर्वतात् निपतितं

शिलाखण्डराशिं उत्थाप्य यावत् न दूरीकुर्मः, तावत् तदधःस्थं मन्दिरं द्रष्टुं न शक्नुमः। परम् इदं कार्यं द्वित्रेषु दिवसेषु न पूर्णतां यास्यति। अस्माभिः अस्य समीपमेव निवासः कर्तव्यः। तदर्थम् आवश्यकान् उटजान् निर्मामः। ततः उत्खननम् आरभामहे'', शिखिमुखी अब्रवीत्।

नागसोमः शिरश्चालनेन अनुमतिं प्रदर्श्य वृश्चिकनायकं प्रति दृष्टिम् अक्षिपत्। वृश्चिकनायकः प्राञ्जलिर्भूत्वा शिखिमुखिनः सम्मुखम् आगत्य स्थितः। शिखिमुखी तस्मै सर्वम् अवश्यं कर्तव्यं प्रत्यपादयत्। शिखिनः सर्वाणि वचनानि निःशेषं श्रुत्वा सः अब्रवीत्, ''स्वामिन्, उटजनिर्माणं न कठिनम्। परं शिलाखण्डानां अपाकरणं श्रमसाध्यम्। यदि वयं कश्चन हस्तिनं हस्तिद्वयं वा नियम्य अस्मिने कार्ये योजयामः, तर्हि कार्यमिदं सुकरं भवेत्।'' ततः सः शिथिलालयार्चकं प्रति अङ्गुल्या निर्दिश्य अवदत्, ''एषः तु निःसंशयं मरणं यास्यति। परं अस्य क्षतिषु औषधोपचारान् प्रति अस्माकम् अनादरः किं युक्तः?''

''शक्यं चेत् काश्चन उपचारान् कृत्वा तस्य पीडां दूरीकुरुत'', शिखिमुखी अवदत्।

वृश्चिकनेतुः आदेशं प्राप्य तदनुचराः समीपवर्तिभ्यः गुल्मेभ्यः औषधीः समानीय



अर्चकपादयोः तल्लेपनम् आरब्धवन्तः। अर्चकस्तु तद् अनङ्गीकृत्य अवदत्, ''तस्य वृक्षस्य शाखासु दोलां बद्ध्वा मां तस्याम् उपवेशयत'' इति।

पुनः सः नम्रभावं समाश्रित्य अवदत्, ''नाहमहं चिरकालं यावत् जीवामि। दिनचतुष्टयाभ्यन्तरे मम मरणं निश्चितम्। अत्रान्तरे यूयं शिथिलालयम् उत्खनत। शिथिलेश्वर्याः विग्रहं दृष्ट्वा अहं सुखेन प्राणान् त्यजामि।''

'मुमूर्षोः अन्तिमेच्छापूर्तता अस्मत्कर्तव्यम्' इति मत्वा शिखिमुखी विक्रमकेसरी च वृश्चिकजातीयान् तद्वचनम् अनुसर्तुम् असूचयन्।

तदा तैः अर्चकस्य पादयोः औषधिलेपं कृत्वा शाखाबद्धायां दोलायां सः उपवेशितः।

तस्मिन्दिवसे सायङ्कालं यावत् कार्यरतैः तैः वृक्षशाखाः छित्वा भूमौ आरोपिताः पर्णैश्च ताः आच्छाद्य वृश्चिकजातीयानां शिखिमुख्यनुयायिनां च कृते उटजाः निर्मिताः।

रात्रौ निद्रार्थं शय्यारूढाः शिखिमुख्यादयः सम्यक् निद्रां न प्राप्नुवन्। निबिडे तस्मिन् वने सर्वत्र वनगजाः बृंहन्ति स्म। हिंस्रपशूनां गर्जनं कर्णौ आपूर्य नदति स्म। रक्षार्थम् उटजान् परितः अग्निसेकान् प्रज्वाल्य तैः सूर्योदयं यावत् कथञ्चित् रात्रिः यापिता।

अपरेद्युः उदिते भास्करे तैः लताभिः रज्जवः निर्माय ताभिः प्रस्तरान् शिलाखण्डान् च बद्ध्वा तेषां दूरीकरणम् आरब्धम्। तदा तदा वनगजाः तेषां कर्मणि विघ्नं जनयन्तः तान् आक्रामन्ति स्म। तदा ते पटहनिनादैः पाषाणक्षेपणेन च तान् गजान् ततः दूरं सारयन्ति स्म। सूर्यास्तं यावत् तेषां कार्ये दिष्ट्या न किमपि महद्विघ्नम् उत्पन्नम्। अस्तङ्गते दिनकरे कार्यात् विरम्य पाकसिद्धतां कर्तुं शिखिमुखिना स्वानुयायिनः आदिष्टाः। तस्मिन्नेव क्षणे तां दर्यां तं परितः वर्तमानायां पर्वतश्रेण्यां चतुर्सु दिक्षु चत्वारः महागजाः तैः दृष्टाः। तेषु गजेषु चत्वार भयङ्करशरीराकृतयः त्रिशूलधारिणः आरूढाः आसन्।

शिखिविक्रमौ स्वानुचरान् सावधानान् अकुरुताम्। सर्वे शस्त्राणि गृहीत्वा योद्धुं सिद्धाः अभवन्। तदा गजारूढैः जनैः उच्चैः उक्तम्, "यत्र स्थ, तत्रैव तिष्ठत। न गन्तव्यं पदात्पदमपि युष्माभिः। हस्तिनां शतम् असङ्ख्याः अघोरपन्थीयाः च अस्मान् अन्वायान्ति। पलायितुं प्रयतध्वे चेत् प्राणैः वियुङ्क्थ।"

इदानीं किं कर्तव्यमिति सम्मन्त्रयितुं शिखिविक्रमौ नागसोमवृश्चिकनायकौ प्रति अपश्यताम्। परं तौ तु शस्त्रपाणी भूत्वा गजारूढान् त्रिशूलधारिणः प्रति असरताम्।

*(अनुवर्तिष्यते)*



# ज्ञाने धर्मः उत प्रयोगे?

**आ**सीत् पुरा कदाचित् भद्रपादः नाम कश्चित् गुरुः। सः रघुवीरपुरनामके ग्रामे राममन्दिरे पुरातनान् पवित्रग्रन्थान् छात्रान् अध्यापयति स्म। अध्यापनकौशल्यात् गुरुः भद्रपादः समीपवर्तिषु ग्रामेषु अपि ख्यातिं लब्धवान्। अतः रघुवीरपुरात् अनतिदूरं ये अन्ये ग्रामाः आसन्, तत्रत्याः ग्रामस्थाः गुरुभद्रपादं बहु मन्यन्ते स्म। अथ कदाचित् गुरुः भद्रपादः नदीतीरे स्नानं कुर्वन् आसीत्। तदा जलस्य केनचित् महातरङ्गेण सः नद्यां गभीरे जले आकृष्टः। साहाय्यार्थं सः उच्चैः आक्रोशत्। वस्तुतः तस्य सर्वेऽपि अनुयायिनः तरणं जानन्ति स्म, किन्तु तेषु एकस्यापि तावत् धैर्यं नासीत् यत् जले उत्प्लुत्य गुरुः बहिः निष्कासनीयः। अतः तैरपि उच्चैः आक्रोशः प्रारब्धः, "कृपया साहाय्यं क्रियताम्!" इति। तदा ततः एव अग्रे व्रजन् महादेवः नाम कश्चन धीवरः गुरोः अवस्थाम् अनुलक्ष्य सपदि जले उत्पतितः। महता कष्टेन जलप्रवाहस्य विरुद्धदिशि तरन् सः गुरुं मृत्युपाशात् मोचितवान्। यदा तेन गुरुः नदीतटम् आनीतः, तदा छात्राः महादेवं परितः स्थित्वा तस्मै कथयितुं समुत्सुकाः आसन्, यत् 'तेन यस्य प्राणरक्षणं कृतं सः न कोऽपि सामान्यः मनुष्यः, अपि तु प्रसिद्धः महान् गुरुः भद्रपादः अस्ति' इति।

केनचित् कालेन प्राप्तचेताः गुरुः स्वशिष्यान् भाषणात् विरमय्य अवोचत्, "यद्यधुना अत्र कश्चन स्तुतिभाक् अस्ति चेत् सः अयमेव भद्रमुखः महादेवः। यः बहून् ग्रन्थान् अधीत्य अपि प्राप्ते समये ज्ञानस्य उपयोगं कर्तुं न शक्नोति, तस्यापेक्षया अल्पम् अधीतवान्, किन्तु प्राप्तज्ञानं प्रयोक्तुं समर्थः जनः एव श्रेष्ठः भवति" इति। तदनन्तरं बद्धाञ्जलिः गुरुः भद्रपादः महादेवं प्रणतवान्। 'स्वज्ञानस्य उपयोजने वयम् असमर्थाः जाताः' इति अवगतवन्तः शिष्याः अवनतशिरस्काः अभवन्।

*- भीमवरपु पुरुषोत्तमः*





# तरङ्गाणां लेखापालः

आङ्ग्लेयसर्वकारः नातिचिरात्प्रागेव प्रस्थापितः आसीत्। तस्मिन् काले केरटाग्रामे वसन् कामशास्त्री सामान्यब्राह्मणः न आसीत्। सः ग्रामस्य लेखापालः आसीत्। सः अतीव बुद्धिमान् आसीत्। सः प्रत्येकं जनात् तस्य लेखाकार्यं कर्तुम् उत्कोचं स्वीकरोति स्म। विना उत्कोचं कस्यापि कार्यं न करोति स्म। तस्मिन् ग्रामे नगरपालकस्य अपि काचित् भूमिः आसीत्। सः तस्याः भूमेः करपूर्त्यर्थं किञ्चित् धनं प्रेषितवान् आसीत्। यदि तस्य धनस्य उचितः उत्कोचः मह्यं न दीयते, तर्हि तद्धनम् अहं सर्वकारकोषं न प्रापयामि इत्युक्त्वा लेखापालः कामशास्त्री तत् धनं पुनः प्रति प्रेषितवान्। नगरपालकः कामशास्त्रिणे उत्कोचम् अदत्त्वा करपूर्ततायै महान्तं प्रयत्नम् अकरोत्, परं तस्य सर्वोऽपि प्रयत्नः कामशास्त्रिकारणात् निष्फलः अभवत्।

तदा सर्वे ग्रामवासिनः सर्वकारीयकरविभागस्य ज्येष्ठाधिकारिभ्यः स्वसमस्यां निवेदितवन्तः, "अयं लेखापालः कार्यकरणसमये सर्वदैव उत्कोचम् इच्छति। एतेन वयं नितरां त्रस्ताः स्मः" इति।

एवं तस्य लेखापालस्य उत्कोचस्वीकरणेन सर्वं तन्त्रमेव आकुलीभवति इत्यतः तस्य दण्डनं निश्चेतुं काचन समितिः प्रस्थापिता। तया समित्या निर्णयः कृतः, यत् लेखापालः कामशास्त्री एकवर्षपर्यन्तं तस्य आवश्यकानि सर्वाण्यपि वस्तूनि तस्मै दत्त्वा महासमुद्रे विद्यमाने द्वीपे स्थानबद्धरूपेण स्थापनीयः। यदा एषा सूचना भारतस्य ब्रिटिशशासनाधिकारिणं प्रति आगता तदा तेन आवश्यकवस्तूनाम् आवेदनार्थं लेखापलः सूचितः। सूचितः, तेन अन्यविधसाधनैः सह मशीलेखनीकर्गजादीनां प्राप्त्यर्थमपि आवेदनं कृतम्। ततः अधिकारिभिः लेखापालस्य इष्टानि सर्वाण्यपि

सी. लक्ष्मी

वस्तूनि तस्मै समर्प्य तं महानौकायां समुपवेश्य सः द्वीपं प्रति प्रेषितः।

यदा लेखापालः द्वीपं प्राप्तवान्, तदा कर्गजेभ्यः लेखनपुस्तिकां निर्माय तस्मिन् रेखाः विलिख्य इत्थं लेखनम् आरभत - 'दशसमुद्रतरङ्गाः तटं प्रति आगताः। तेषु अष्ट प्रत्यागताः।' एवं यदृच्छया यत्किञ्चिदपि तेन पुस्तिकायां लिखितम्। एवमेव प्रतिदिनं लेखनकारणेन लेखनपुस्तिकाः क्रमेण पूर्णाः अभवन्। अत्रान्तरे ईस्ट्-इण्डिया-कम्पनीजनानां नौका तत्र प्राप्ता। लेखापालः तां नौकाम् अवरुद्ध्य शतरुप्यकाणां प्राप्तिकां दत्त्वा वस्तूनि आनयतु इत्युक्तवान्।" यावत् भवान् एतानि वस्तूनि न ददाति, तावत् नौकायाः इतः गमनस्य अनुमतिं न ददामि। अहम् अस्मि तरङ्गाणां लेखापालः। पश्य, एषा मम गणनापुस्तिका वर्तते।"

सः आङ्ग्लेयाधिकारी अपि शतरुप्यकाणि दत्त्वा तस्याः प्राप्तिकायाः पृष्ठतः लिखितवान्, 'तरङ्गाणां लेखापालाय प्रदत्तं धनम्' इति। तदनन्तरं तेन मार्गेण या या नौका गच्छति स्म, तस्याः नौकाधिकारेः लेखापालः शतं रुप्यकाणि स्वीकरोति स्म। तेभ्यः लेखापालेन दत्ताः सर्वाः प्राप्तिकाः इङ्ग्लैण्डनगरस्थे मुख्यकार्यालये आगताः। हस्तलिखिताः प्राप्तिकाः गणने अविश्वासार्हाः भूत्वा बाधाम् उत्पादयेयुः इति मत्वा तत्रस्थाः लेखापालाः मुद्रितप्राप्तिकाः एव इच्छन्ति स्म, न तु हस्तलिखिताः जिल्लापालकस्य समीपम् आगता। अन्ततो गत्वा अन्वेषणे कृते अस्याः अव्यवस्थाः मूलं लेखापालः कामशास्त्री इति ज्ञातं, यः च उत्कोचस्वीकरणनिमित्तं मध्येसमुद्रं द्वीपे स्थानबद्धतादण्डम् अनुभवन् आसीत्। एकाकी सुदूरवर्तिनि अपि द्वीपे अयं धनव्यवहाररतः आत्मानं तरङ्गाणां लेखापालत्वेन परिचाय्य प्राप्तिकां दत्त्वा धनम् अर्जयति इति दृष्ट्वा तस्य आर्थिकव्यवहारकौशलम् अवगत्य सर्वकारेण तस्य लेखापालस्य दण्डनातः मोचनं कृतं लेखापालश्च कार्यावसरे तत् धनं स्वीकरोति, तन्न उत्कोचः, अपि तु तस्य कार्यशुल्कम् इत्यपि उद्घोषितम्।



# विफलितं यशः

कलिङ्गदेशस्य भूपः दानकर्मणि कर्णतुल्यः इति कथ्यते स्म। सः प्रतिदिनं सहस्राधिकेभ्यः निर्धनेभ्यः अन्नदानं ब्राह्मणेभ्यश्च स्वर्णदानं करोति स्म। अतः दशसु दिक्षु 'महादाता' इति आख्यया तस्य कीर्तिः प्रसृता।

कलिङ्गभूपस्य एका दुहितासीत्। प्राप्तवयस्कायाः तस्य राजपुत्र्याः निमित्तं वरसंशोधनं प्रारब्धम्। अन्ततो गत्वा राज्ञा ज्ञातं, यत् कम्बोजदेशस्य राजपुत्रः तस्य कन्यायै सर्वथा अनुरुपः वरः अस्ति।

अतः कलिङ्गभूपः दूतद्वारा कम्बोजदेशं प्रति सन्देशं प्रेषितवान्। दूताः कम्बोजराजं प्रति आगत्य अवदन्, ''हे राजन्, अस्मद्राजः श्रुतकीर्तः प्राप्तयशाः वर्तते। सः सहस्राधिकेभ्यः निर्धनेभ्यः ब्राह्मणेभ्यश्च प्रतिदिनं दानं ददाति। एवंगुणविशिष्टस्य अस्माकं राज्ञः कन्यया सह भवत्पुत्रस्य परिणयः, चेत् न ततोऽप्यधिकः आनन्दोत्सवः इति मन्यामहे वयम्''।

''यस्मिन् राज्ये प्रतिदिनं सहस्राधिकाः दानार्थिनः भिक्षां याचन्ते, तस्मिन् भवतां राज्ये निर्धनानां जनसङ्ख्या महती वर्तत इति मन्ये। तस्मात् दानकर्मणापि प्राप्तयशसः अपि युष्माकं राज्ञः एतादृशेन निर्धनराज्येन सह सम्बन्धं प्रस्थापयितुं नेच्छामः वयम्'' सूक्ष्ममतिः कम्बोजराजः अगदत्।





# कः उत्तमः गुणः ?

एकदा त्रयः जनाः एकस्मिन् उपाहारगृहे अमिलन्। तेषु एकः सुप्रसिद्धः वैद्यः आसीत्। द्वितीयः महान् विद्वान् आसीत्। तृतीयश्च महाधनिकः आसीत्। त्रयः जनाः कथाप्रसङ्गे आत्मनः वैयक्तिकमाहात्म्यविषये मिथः विवादम् आरभन्त।

तेषु धनिकः अवदत्, ''एतत् जगत् धनेन एव प्रवर्तते। धनस्य एव आज्ञां सर्वे जनाः पालयन्ति।''

''एतत् न सत्यम्। यदा पुरुषः आरोग्यसंपन्नः वर्तते तदा एव सर्वेषां सुखानाम् उपभोगाय समर्थः भवति। अतः वैद्यस्य कार्यम् एव महत्त्वपूर्णम्'', इति वैद्यः अवदत्।

''यद्यपि मानवः शतं शरदः जीवति, तस्य समीपे विपुलं धनमपि अस्ति तथापि यः विद्याविहीनः सः तु पुच्छविषाणहीनः साक्षात् पशुरेव'', इति विद्वान् अब्रवीत्।

उपाहारगृहस्य स्वामी तेषां सम्भाषणं शृण्वन् आसीत्। सः तेषां कृते समस्यापरिहारं सूचितवान्, ''भवत्सु कः उत्तमः इत्यस्य निर्णयः केवलं विवादेन सुलभतया सिद्धः न भवेत्। कामपि परीक्षाम् आयोजयतु, यया भवत्सु त्रिषु कः उत्तमः इत्यस्य निश्चयः भवेत्'', इति। ते अपि सहमतिं प्रादर्शयन्, यत् तेषां मध्ये कः उत्तमः इत्यस्याः समस्यायाः परिहारार्थम् एका परीक्षा करणीया।

तदर्थं त्रयः अपि समीपस्थं ग्रामं गन्तुं प्रातिष्ठन्त। उपाहारगृहस्य एकस्मिन् कोणे कश्चन दशवर्षीयः बालकः सुप्तः आसीत्। सः उत्थाय तेषां समीपम् आगतवान्। सः उक्तवान् च, ''अयि महोदयाः, अहम् अनाथः बालकः अस्मि। कृपया भवन्तः मां भवद्भिः सह नयन्तु। अहं भवतां यां कामपि सेवां कर्तुं सिद्धः'', इति। ते त्रयः च तस्मिन् बालके

च.ड.लक्ष्मणरावः



स्वीकरोति, तर्हि सः अचिरात् एव पुनः स्वस्थः भवितुं शक्नोति। तावत् पर्यन्तं धनिकः विद्वान् च भवने इतस्ततः अहिण्डताम्। तौ चिन्तितवन्तौ, यत् पूर्वम् एषः वृद्धः सम्पन्नं जीवनं यापितवान् स्यात्।

धनिकः अचिन्तयत्, यत् तारुण्ये एषः वैभवयुक्तं जीवनम् अनुभूतवान् स्यात्। अधुना अस्मिन् पश्चिमवयसि एषः दरिद्रः अभवत्।

विद्वान् अचिन्तयत्, यत् प्रायः एषः वृद्धः सुशिक्षितः न स्यात्। अन्यथा तस्य गृहस्य एतादृशी स्थितिः न अभविष्यत्। तस्य गृहं विद्वद्भिः तथा च पण्डितैः सर्वदा सेव्यमानं शास्त्रचर्चया गुञ्जायमानम् अभविष्यत्।

ततः अकस्मात् त्रयाणाम् अपि जनानां मनसि कश्चन समानः एव विचारः प्रादुर्भूतः। ते अचिन्तयन्, यत् वृद्धस्य एषा स्थितिः तेषां मध्ये कः उत्तमः इति निर्णेतुम् उपयोजनीया।

वैद्यः अपरेद्युः वृद्धस्य कृते उपचाराणां प्रारम्भं कृतवान्। सः सावधानतया औषधानां योजनम् अकरोत्। दिनत्रयस्य कालावधौ एव वृद्धः स्वास्थ्यं सामर्थ्यं च पुनरपि प्राप्नुयात् इत्यर्थं बद्धपरिकरः कार्यरतः सञ्जातः।

धनिकः गृहगतव्ययार्थं तथा च औषधानां कृते धनस्य योजनां कृतवान्। भोजननिर्माणार्थं एकः पाचकः च नियुक्तः तेन।

विद्वान् तस्य वृद्धस्य सहवासे एव पुरातनधार्मिकग्रन्थेभ्यः कथाः तस्मै वृद्धाय

दयां प्रदर्शितवन्तः। ते तैः सह तमपि अनयन्।

यदा ते ग्रामं प्रविष्टवन्तः, तदा ते एकम् अतीव जीर्णं भवनं दृष्टवन्तः। तै भवने प्रविष्टे कस्यस्विज्जनस्य अनियन्त्रितः कासध्वनिः तैः श्रुतः।

ते चत्वारोऽपि जनाः एकस्मिन् कोणे स्थितं कक्षं प्रति गतवन्तः, यतः कासस्य ध्वनिः श्रूयते स्म। तत्र ते एकं वृद्धं पर्यङ्के शयानम् अपश्यम्।

तदा बालकः वृद्धम् अपृच्छत्, ''भोः तात!, किं गृहे नान्यः कोऽपि वर्तते?''

वृद्धः दीर्घं निःश्वस्य अवदत्, ''आम्। रे बालक, अहम् एकाकी अस्मि।''

वैद्यः वृद्धस्य मणिबन्धं धृत्वा तस्य नाडीपरीक्षणम् अकरोत्। सः स्वमनसि अचिन्तयत्, यत् यदि एषः योग्यम् औषधं

श्रावयति स्म। तस्य च मनोरञ्जनं यथा भवेत् तथा प्रयतते स्म।

यः बालकः तैः सह आगतवान्, सः प्रथमदिनात् आरभ्य तस्य वृद्धस्य स्वकीयः इव संवृत्तः। सः सततं तस्य वृद्धस्य समीपे एव तिष्ठति स्म। सः तस्य परिचर्यां करोति स्म। सः तस्य सेवां स्नेहेन करोति स्म। यथा सर्वे आशां कुर्वन्ति स्म, तथा सः वृद्धः शीघ्रमेव स्वस्थतां गतः। पुनरपि त्रयः अपि जनः तेषां विवादं प्रारब्धवन्तः। तेषु एकस्य एव कारणात् वृद्धः आरोग्यसम्पन्नः जातः इति ते त्रयः अपि प्रत्यपादयन्।

सः वृद्धः एतत् सर्वं अशृणोत् अस्मयत च। भवत्सु नैकोऽपि मम स्वास्थ्यलाभस्य कारणीभूतः। वस्तुतः एषः बालकः एव तत्र कारणम्। स्वास्थ्यं प्राप्तुं, सामर्थ्यं च लब्धुं एषः मम साहाय्यं कृतवान्। भवतां मध्ये एकः श्रीमान् धनिकः, द्वितीयः कुशलः तज्ज्ञः वैद्यः तथा च तृतीयः विद्वान् पण्डितः। किन्तु मयि सर्वेऽपि एते गुणाः वर्तन्ते। मम समीपे धनेन सम्पूर्णा मञ्जूषा विद्यते।

कस्मिंश्चित् काले अहं मम रुग्णान् मृत्योः मुखात् प्रत्यानयम्। अहं तान् दीर्घं, स्वास्थ्यपूर्णं च जीवनं यापयितुं साहाय्यम् अकरवम्। अहं मम वैदुष्यकारणात् नैकान् पारितोषिकान् प्राप्नुवम्। किन्तु एतेषु किमपि मम जीवनरक्षणार्थम् साहाय्यभूतम् उपयुक्तं वा नासीत्। एतस्य कारणम् एतत् एव, यत् अहं मानवस्य स्नेहात् वञ्चितः आसम्। जनाः केवलं मम धनं, मम कौशलं, मम समयं वा इच्छन्ति स्म। एषः बालकः मयि दयाभावं, कृपालुतां च दर्शितवान्। सः पुनरपि मां स्वस्य व्यक्तिमत्त्वलाभाय साहाय्यं कृतवान्। मम दृष्टिकोणे निर्हेतुकः स्नेहभावः एव उत्तमः सद्गुणः। अहं एतं बालकं मम अङ्के आरोप्य मत्पुत्रवत् पालयिष्यामि।

ते त्रयः अपि जनाः ततः निर्गतवन्तः। संतुष्टमनसः ते चिन्तितवन्तः, यत् अन्ततो गत्वा तेषां विवादेन सत्यमेव तत्त्वबोधः तु सम्यक् अजायत।





# पुरस्कारः

पूर्णिमायां धवलीकृतधरणीतला कौमुदी व्यलसत्तराम्। भोजनानन्तरं वितर्द्यां वर्तमाने आसन्दे पितामहः सुखेन समुपविष्टः। बालकाः ततः पूर्वमेव तं प्रतीक्षमाणाः तत्रैव उपविष्टाः आसन्। पितामहः जिघ्रातिनीं नासिकायां निवेश्य इमं श्लोकम् अपठत्,

> ''अज्ञा एव जनाः प्रायो
> वञ्च्यन्ते वञ्चकैर्नृभिः।
> प्राज्ञा न जातु वञ्च्यन्ते
> सुमतिश्चोलराडिव।

''अस्य कोऽर्थः पितामहा? किमेषा काचित् नूतनी कथा अस्ति? कामपि कथाम् श्रावयत्वेव'', ते बालकाः कोलाहलम् अकुर्वन्।

अयि वत्साः! कथां श्रावयितुमेव मया एषः श्लोकः खलु आदौ श्रावितः! परं पूर्वं यूयं किमर्थं श्लोकस्यास्य अर्थं न पृच्छथ? शृणुत तावत! अस्मिन् संसारे नैके वञ्चकाः सन्ति। ते च कान् वञ्चयन्ति? केवलं वराकान् अल्पमतीनेव खलु! परं कदाचित् शठं प्रति शाठ्यम् आचरन्तः विचक्षणाः एतान् वञ्चकान् एव वञ्चयन्ति। कदाचित् केनचित् सुमतिनाम्ना राज्ञा कोऽपि शठः इत्थमेव वञ्चितः इति अस्य श्लोकस्य अर्थः अस्ति'', पितामहः अवदत्।

''सुमतिः कं शठम् अवञ्चयत्? कश्चासीत् सः शठः?'', ते बालकाः युगपदेव अनेकान् प्रश्नान् अपृच्छन्। ''अरे! सर्वानपि वः प्रश्नान् उत्तरामि। शृणुत तावत् सावधानचेतसा!'', इति उक्त्वा पितामहः कथाकथनम् आरभत।

''सुमतिर्नामा कश्चन राजा चोलराज्यं परिपालयति स्म। सुमतिशब्दस्य अर्थः

सी. शेषाद्रिः

'शोभना मतिर्यस्य, तन्नाम अतीव बुद्धिमान् इति अस्ति किल! सत्यमेव अतीव मेधावी। सः महावीर्यशाली, शास्त्रेषु कृतभूरिपरिश्रमः गुणग्राही चाप्यासीत्। अतः तस्य समीपे अनेके विद्वांसः, प्रज्ञावन्तः जनाः आगत्य स्वपाण्डित्यं प्रदर्श्य सम्माननं प्राप्नुवन्ति स्म।

''कस्त्वम्'', इति नृपेण पृष्टे ''महाराज अहं श्रेष्ठः वैज्ञानिकः अस्मि, अहं तां विद्यां जानामि, यया कमपि धातुम् अहं स्वर्णे परिवर्तयितुं शक्नोमि। इयम् अस्माकं पारम्परिकी विद्या अस्ति'', इति अलीकं सः अवदत्।

राजा लीलयैव तस्य अनृतभाषणस्य तात्पर्यम् अवागच्छत। सः तस्य वञ्चकस्यैव वञ्चने स्वमतिम् अकरोत्। सः स्वसेवकम् आहूय तस्य कर्णे किमपि अवदत्। सेवकः एकां लोहमञ्जूषां तस्मै वञ्चकाय अददात्।

'प्रायः राज्ञा तस्यां मञ्जूषायां सुवर्णरजतमौक्तिकानि संस्थाप्य मह्यं दत्तानि' सन्ति इति धिया यदा वञ्चकः मञ्जूषाम् उदघाटयत्, तदा तेन लक्षितम्, यत् सा मञ्जूषा रिक्ता एव आसीत्।

सः राज्ञे अवदत् , ''मम कौशलं ज्ञात्वा भवान् पुरस्कारेण मां सम्मानयिष्यति इति मत्वा अहं अतीव दूरात् पर्वतप्रदेशात् अत्र आशान्वितः आगतः परं भवता तु रिक्तपेटिकादानेन मम अपमानः कृतः।''

तच्छ्रुत्वा राजा अवदत्, ''किमर्थं मञ्जूषादानस्य कारणम् अज्ञात्वा वृथा जल्पसि? त्वम् कस्यचिदपि धातोः सुवर्णे परिवर्तनं कर्तुं पारयसि खलु? तथा सति अहं तुभ्यं किं वा ततोऽपि मौलिकं दातुं शक्नुयाम्? त्वं स्वयमेव स्वकौशलेन सुवर्णम् निर्माय सुरक्षार्थम् अस्यां मद्दत्तायां लोहमञ्जूषायां निदधातुं शक्नोसि। अतः मया तुभ्यम् इयम् मञ्जूषा दत्ता। कोऽत्र मम दोषः?'' एतत् श्रुत्वा आस्थानस्थाः सर्वेऽपि उपहासेन प्राहसन्।



# कोऽहं भविष्यामि




**खा**द्यसमालोचकः अथ वा खाद्यलेखकः इति संज्ञा व्यापकतया उपयुज्यते। ये लेखकाः उपाहारगृहेषु विभिन्नान् नूतनान् खाद्यपदार्थान् अन्विष्यमाणाः तान् आस्वाद्य तेषां रुच्यन्वेषणानां फलितं प्रकाशयन्ति ते खाद्यलेखकाः इति वर्ण्यन्ते। ये खाद्यपदार्थान् अधिकृत्य स्वस्य अभिप्रायं वर्तमानपत्रेषु अथ वा मासिकपत्रिकासु स्तम्भेषु लिखन्ति प्रकाशयन्ति च ते लेखकाः खाद्यस्तम्भलेखकाः इति कथ्यन्ते।

खाद्यलेखकाः उपाहारगृहाणां विषये लिखन्ति। खाद्यपदार्थानां शकटिकाः, लघ्वाहारगृहाणि, तथैव च महार्घाणि भव्यानि उपाहारगृहाणि, काफीपेयगृहाणि, मिष्टान्नापणाः, खाद्यपदार्थानां निर्मातारः, तथा च अन्ये खाद्यपदार्थानाम् उत्पादकाः इत्येतान् विषयान् अधिकृत्य खाद्यसमालोचकाः लिखन्ति। एते लेखकाः जनेभ्यः चिन्तनसहितं, सविस्तरं तथा पूर्वग्रहरहितं ज्ञानं ददति।

समालोचकाः स्वयम् उपाहारगृहाणि गच्छन्ति। तत्र तेषां वैशिष्ट्यपूर्णानि खाद्यपदार्थानि आस्वादयन्ति। तदनन्तरं च वर्तमानपत्रेषु, मासिकपत्रिकासु, आंतर्जाले, दूरदर्शने, आकाशवाण्यां च स्वाभिप्रायं प्रकाश्य जनेभ्यः ज्ञापयन्ति। एषु दिवसेषु आंतर्जालं जनानाम् उपाहारगृहविषये स्वाभिप्रायस्य निर्माणार्थम् अतीव महत्त्वपूर्णं भवितुम् अर्हति।

एतस्याः वृत्त्याः कृते भवान् खाद्यान्नं खाद्यपदार्थं वा यं कमपि

नूतनतया आस्वादितः कश्चन खाद्यपदार्थः वैचित्र्यपूर्णः परदेशीयः वा भवतु, भवताम् आहारशैलीतः भिन्नो वा भवतु, तथापि तं खादित्वा तस्य विषये स्वस्य अभिप्रायं यथाशक्ति सविस्तरं लेखनम् अस्मिन् खाद्यसमालोचककार्यक्षेत्रे अपेक्ष्यते।

केवलं खाद्यपदार्थान् आस्वाद्य भवान् उत्तमः खाद्यसमालोचकः भवितुं न अर्हति, प्रत्युत खाद्यानां प्रत्येकं गुणविशेषविषये गहनं ज्ञानम् आवश्यकम्। अन्नधान्यानां क्षेत्रे उत्पादनं, खाद्यपदार्थस्य वैशिष्ट्यपूर्णा परंपरा, इतिहासः, खाद्यानां घटकपदार्थाः, खाद्यपदार्थानां निर्माणविधिः, उपाहारगृहस्य प्रचालनपद्धतिः इत्येषां विषयानां ज्ञानम् आवश्यकम्।

खाद्यसमालोचकः प्रामाणिकः निष्पक्षः च एव भवेत्। समालोचकः प्रतिवारं नकारात्मिकां दृष्टिं न स्वीकुर्यात्। समालोचकः इति शब्दः सततं नकारात्मकः भवितुं न अर्हति। यदि खाद्यम् उत्तमं नास्ति, तर्हि चतुरः समालोचकः खाद्यस्य परिष्कारं कर्तुं अथ वा उपाहारगृहस्य सुधारणाः कर्तुं सूचनाः दातुमर्हति।

**वेतनम्**

खाद्यसमालोचकः वेतनं तस्य लेखस्य प्रकाशनं कुर्वाणं प्रकाशकम् अथ च प्रकाशनस्थानम् अवलम्बते। यः स्थानिकस्तरीयस्य वर्तमानपत्रस्य कृते लेखनं करोति, तस्य अपेक्षया यस्य लेखः राष्ट्रीयस्तरीयायां मासिकपत्रिकायां प्रकाशितः भवति, सः अधिकं धनं प्राप्तुं शक्नुयात्।

*- सई*

# चन्दमामीया सामान्यज्ञानपरीक्षा - ४५

*(ऊनषोडशवर्षीयाणां कृते)*

समुचितोत्तरदाता अर्हति ₹२५०/- पारितोषिकत्वेन*

*एकाधिकजनाः यदि साधूत्तरं प्रेषयेयुः, तर्हि प्रतिजनं ₹५०/- दीयेरन् पारितोषिकत्वेन।

अधोक्तं क्रियतां भवद्भिः-

१. उत्तराणि समपत्रे लेखनीयानि।
२. नाम, वयः सङ्केतः (पिन् कोड्सहितः) प्रेषणीयः।
३. पिहितपत्रे **चन्दमामीया सामान्यज्ञानपरीक्षा - ४५** इति लेखनीयम्।
४. ३० नवम्बर पूर्वं भवदुत्तराणि अस्माभिः प्राप्तानि भवेयुः तथा तानि प्रेषणीयानि।
५. २०१३ तमवर्षस्य जनवरीमासीये अङ्के परिणामः प्रकाशयिष्यते।

## गान्धिवर्यस्य विषये प्रश्नावलिः



१. गान्धिवर्यस्य जन्मस्थलं किम् ?
२. गान्धिवर्यस्य मातुः नाम किम् ?
३. गान्धिवर्यः रेल्यानस्य प्रकोष्ठिकातः बहिः निष्कासितः इत्येषा यत् सा घटना दक्षिणाफ्रिकादेशे कस्मिन् नगरे प्रवृत्ता ?
४. गान्धिवर्येण यस्य काङ्ग्रेसाधिवेशनस्य आध्यक्ष्यं निरूढं, तत् कस्मिन् नगरे प्रवृत्तम्?
५. गान्धिवर्येण भारते आरब्धायाः पत्रिकायाः नाम किम् ?
६. गान्धिवर्येण स्वस्य प्रथमः आश्रमः कुत्र प्रस्थापितः ?
७. गान्धिवर्येण भारते प्रथमः सत्याग्रहः कुत्र कृतः ?

## चन्दमामीया सामान्यज्ञानपरीक्षा-४२ जुलाई २०१२ उत्तरम्

१. 'चिकन'कला; २. मैसूरु; ३. पंजाब; ४. गुजरात-राजस्थानराज्ये; ५. आन्ध्रप्रदेशः; ६. ओडिशा; ७. महाराष्ट्रम्; ८. काञ्चीपुरम्.

*जुलाई'१२ मासस्य सामान्यज्ञानपरीक्षायाः विजेतृपदं न केनापि प्राप्तम्।*



# हस्यताम् उदरोपपीडम्



*विनयः* - एकदा यदा अहं मार्गे खेलन् आसम्, तदा वेगेन आगच्छत् मोटरसायकलयानं मयि आघट्टितम्। अहं विगतसंज्ञः अधः अपतम्।

*विशालः* - हा हन्त! भवान् तस्मिन् अपघाते दिवङ्गतः आहोस्वित् देवदयया तारितः?

*विनयः* - अहं स्पष्टतया न स्मरामि। तस्मिन् समये अहं केवलं चतुर्वर्षीयः आसम्।



सर्पद्वयं परस्परेण सह जल्पति स्म। तयोः एकः सहसा द्वितीयं प्रति मुखं कृत्वा सभयम् अपृच्छत्, "किम् अस्मज्जातिः सविषा?"

द्वितीयः सर्पः अवदत्, "आं, सुव्यक्तमिदम्! परं किमर्थं तथा पृच्छसि?"

प्रथमः सर्पः उदतरत्, "इदानीमेव अहं मम ओष्ठं दष्टवान्।"



*रोगी* - अहम् एकां कुञ्चिकां गिलितवान्।

*वैद्यः* - कदा?

*रोगी* - मासचतुष्टयात् पूर्वम्।

*वैद्यः* - किमाह भवान्? तथापि अद्य यावत् भवान् मां प्रति किमर्थं नागच्छत्?

*रोगी* - अहं द्वितीयां अनुकृतां कुञ्चिकाम् एतावति काले उपयुनज्मि स्म। इदानीम् सापि क्वचित् नष्टा!

कश्चन चतुर्वर्षीयः बालकः कारयानस्य पृष्ठवर्तिनि आसने उपविश्य सेवफलं खादन् सः पितरम् अपृच्छत्, "तात, मया खाद्यमानं सेवफलं कथं पिङ्गलं जायते?"



"त्वया दता सेवफलस्य त्वचि भिन्नायां खादितायां च फलान्तःसारं वायुना स्पृष्टे सति आदौ शुभ्रस्यापि तस्य वर्णः पिङ्गलत्वेन विपरिणमते, वातावरणस्थप्राणवायुजन्यरासायनिकप्रक्रियायां फलान्तर्वर्तिद्रव्ये पारमाण्विकसंरचनाविपरिवर्तनात्", पुत्रस्य जिज्ञासां शमयितुकामः पिता शास्त्रं व्यवृणोत्।

तदनन्तरं दीर्घकालं यावत् शान्तता आसीत्। ततश्च बालकः सौम्यस्वरेण अपृच्छत्, "तात, त्वं मामुद्दिश्य किञ्चित् अवदः किम्?"



# वर्ध्यताम् शब्दसम्पत्तिः

कति भारतीयाः भाषाः ज्ञायन्ते भवद्भिः ? अधुना चन्दमामा-साहाय्येन भारतीयाः भाषाः पठित्वा कामं भारतभ्रमणं क्रियताम् । अधस्तनं शब्दपटं दृष्ट्वा स्वभाषायां वाक्यं पठन्तु। अनन्तरं निर्देशानुसारं तदेव वाक्यम् अन्यासु भाषासु कथं वक्तव्यम् इति अवगच्छन्तु ।





| English | No I'm free now. | Have you understood? |
|---|---|---|
| Sanskrit | न, अधुना व्यस्तः नास्मि। | अवगतं वा? |
| Telugu | లేదు, నేను ఇప్పుడు ఖాళీగా ఉన్నాను.<br>लेदु, नेनु इप्पुदु कलीगा वुन्ननु. | నీకు అర్థమైందా?<br>नीकु अर्थमैन्द? |
| Tamil | இல்லை, நான் இப்போது சும்மாத்தான் இருக்கிறேன்.<br>इल्लै, नान् इप्पोदु सुम्मथ्थान इरुक्रिरेन्. | உனக்குப் புரிந்ததா?<br>उनक्कु पुरिन्ददा? |
| Bengali | না, এখন আমার কোনও কাজ নেই।<br>ना, एखोन आमार कोनो काज नेइ. | তুমি কি বুঝতে পেরেছ?<br>तुमि कि बुझ्तेय पेरेछ्हो? |
| Marathi | मी आता मोकळीच/मोकळाच आहे.<br>मी आता मोकळा/मोकळी आहे. | तुला हे समजलं का?<br>तुला हे समजले का? |
| Kannada | ಇಲ್ಲ, ಈಗ ನನಗೆ ಪುರುಸೊತ್ತಿದೆ.<br>इल्ला, नान्गे पुरुसोत्तिदे. | ನಿಮಗೆ ಅರ್ಥವಾಯಿತೇ?<br>निमगे अर्थवायिते? |
| Odia | ମୁଁ ବର୍ତ୍ତମାନ ଖାଲି ଅଛି।<br>मुन बर्त्तमान खालि अछि | ତୁମେ ବୁଝିପାରିଲ ?<br>तुमे बुझिपारिला? |
| Gujarati | ના હવે મને ફુરસદ છે.<br>ना हवे मने फुरसद छे. | શું તમે સમજી ગયા?<br>शुं तमे समझी गया? |
| Assamese | নহয়, মই এতিয়া আজৰি।<br>नोहोइ, मोइ अतिया आजोरि. | তুমি বুজি পালানে?<br>तुमि बुजि पालाने? |
| Malayalam | ഇപ്പോൾ എനിക്ക് തിരക്കില്ല.<br>इप्पोल एनिक्कु थिरक्किला. | നിങ്ങൾക്ക് മനസ്സിലായോ?<br>निन्गल्क्कु मनस्सिलयो? |
| Hindi | नहीं अब मेरे पास कोई काम नहीं।<br>नहीं अब मेरे पास कोई काम नहीं। | क्या तुम समझ गए/गईं?<br>क्या तुम समझ गये/गयी? |





| English | Have you taken notes? | It is enough for today. |
|---|---|---|
| Sanskrit | त्वया टिप्पणि: कृता वा? | अद्य एतावत् पर्याप्तम्। |
| Telugu | నీవు నోట్స్ తీసుకున్నావా?<br>नीवु नोट्स् थीसुकुन्नवा? | ఈ రోజుకు ఇది చాలు.<br>ईरोजुकु इदि चालु. |
| Tamil | நீ குறிப்பு எடுத்துக் கொண்டாயா?<br>नी कुरिप्पु एदुथ्थु कोन्डाया? | இன்று இது போதும்.<br>इन्द्रु इदु पोदुम्. |
| Bengali | তুমি কি নোট নিয়েছ?<br>तुमि कि नोट् नियेछ्हो? | আজকের জন্য এটাই যথেষ্ট।<br>आज्केर जोन्यो एताइ यथेश्तो. |
| Marathi | तू मुद्दे काढलेस का?<br>तु मुद्दे काढलेस का? | आजच्यासाठी हे पुरेसं आहे.<br>आजच्यासाठी हे पुरेसे आहे. |
| Kannada | ನೀವು ಟಿಪ್ಪಣಿ ಮಾಡಿಕೊಂಡಿರಾ?<br>नीवु ट्रिप्पणि माडिकोन्डिरा? | ಇವತ್ತಿಗೆ ಇಷ್ಟು ಸಾಕು.<br>इवत्तिगे इशु साकु. |
| Odia | ତୁମେ ନୋଟ୍‌ସ ନେଇଛ କି?<br>तुमे नोट्स् नैछ्ह कि? | ଏହା ଆଜି ପାଇଁ ଯଥେଷ୍ଟ।<br>एहा आजि पाइन यथेस्त. |
| Gujarati | તમે નોટ્સ લઈ લીધા?<br>तमे नोटस् लई लीधा? | આજ માટે પૂરતું છે.<br>आज माटे पूरतुन छे. |
| Assamese | তুমি টুকি ললানে?<br>तुमि तुकि लोलाने? | আজিৰ বাবে এয়াই যথেষ্ঠ।<br>आजिर बाबे ऐयाइ जथेस्थो. |
| Malayalam | നിങ്ങൾ എഴുതിയെടുത്തോ?<br>निन्गल्ल एफ्हुथियेदुथो? | ഇന്നത്തേക്ക് ഇത്ര മതി.<br>इन्नथेक्कु इथ्र मथि. |
| Hindi | क्या तुमने नोट्स लिये?<br>क्या तुमने नोटस् लिए? | यह आज के लिये काफ़ी है।<br>यह आज के लिए काफी है। |

# भारतदर्शनम्

## अपराधिभ्यः शिक्षकनिर्माणम्



अचिरेणैव कालेन तिहार-केन्द्रीय-कारागृहस्य अतिसुरक्षितविभागे तृतीय-कारागृहे स्थिताः बन्दिजनाः अध्यापकरूपेण नवपरिचयं प्राप्नुवन्ति। हिन्दुवृत्तपत्रे प्रकाशितां वार्ताम् अनुसृत्य श्रूयते, यत् कारागृहे औपचारिकशिक्षणमारब्धुं दिल्लीसर्वकारस्य शिक्षणाधिकारिणा नूतनकार्यक्रमः सञ्चालितः अस्ति। एषः द्विधा सञ्चाल्यते - बन्दिजनानां अध्यापकरूपेण अर्हताप्राप्त्यर्थं प्रशिक्षणम् इत्येकः अंशः; सुचारु-अभ्यासक्रमपरीक्षापद्धत्योः सञ्चालनम् इत्यपरः अंशः। अष्ट-शासकीय-विद्यालयानां शिक्षकैः बन्दिजनानां प्रशिक्षणं क्रियते। त्रयाणां मूलभूतपुस्तकानां साहाय्येन एते प्रशिक्षिताः बन्दिजनाः अनन्तरं अन्यान् प्रशिक्षयन्ति। एतानि त्रीणि पुस्तकानि युवकानां मूलभूतशिक्षणार्थं दत्तानि सन्ति। उच्चतरवर्गेषु पाठयितुं अर्हतासम्पादनार्थं ते प्रथमप्रशिक्षिताः परीक्षां पारयितुं शक्नुवन्ति। यदा ते कारागृहाद् मुक्ताः भविष्यन्ति, तदा एतद् शिक्षणं तेषां साहाय्यं करिष्यति। कारागृहेऽपि इदं शिक्षणं उपयुक्तमिति सिद्धमस्ति।

## सौरोर्जा सर्वत्र!

राजस्थानराज्ये तिलोनियानामके स्थाने सौरऊर्जया सर्वविधकार्याणि प्रचलन्ति। बुङ्करः रॉय इत्यनेन नाम्ना सुपरिचितः समाजसेवकः न्यूनातिन्यूनेन व्ययेन ग्रामेषु सर्वत्र सौरविद्युतः उपयोगः भवितुम् अर्हति इति प्रतिपादयति। नवविंशतिवर्षेभ्यः पूर्वं तेन प्रस्थापिते बेअरफूटमहाविद्यालये सौर-फोटोवॉल्टॅनिक-यन्त्राणि देशस्य विविधभागेषु उपयोक्तुं, सुयोग्यतया तेषां सञ्चालनं च कर्तुं नैकाः ग्रामीणयुवकाः प्रशिक्षणं प्राप्नुवन्ति। एतानि यन्त्राणि सौर-ऊर्जां साक्षात् विद्युद्रूपे सङ्क्रमितुं उपयुक्तानि सन्ति। वालुकाप्रदेशः भवतु वा वन्यप्रदेशः, यस्मिन् कस्मिन्नपि दुर्गमस्थाने सौर-ऊर्जा-दीपाः उपयुक्ताः सन्ति। सौरोर्जायाः रूपेण रॉयमहोदयस्य बेअरफूट-महाविद्यालयेन पुनर्नवीकरणे अनर्हस्य पारम्पारिक-विद्युत्-स्रोतसः स्थाने उपयुक्ततरः विकल्पः प्रस्तुतः। एषः विकल्पः अतिव्ययं नापेक्ष्यते, न च प्रदूषणं जनयति। रॉयबेअरफूट महाविद्यालयस्य सौराभियन्तारः राजस्थानादपि बहिः आभारतं नैकेषु प्रदेशेषु एतं सन्देशरूपं प्रकाशं प्रसारयन्ति। दुर्गमः हिमाच्छादितः भारततिबेटयोः सीमनि वर्तमानः लडाखनामकः प्रदेशः तेषु प्रदेशेषु अन्यतमः।



नातिचिरात्प्राक् जर्मनीदेशे बेलिन्-नगरे रोटस्-राट्-हाउस् नामके रक्ते नगरसभागारे बुङ्कररॉयमहोदयः पुरस्कारप्रदानेन सम्मानितः। पुरस्काररूपेण प्राप्तं धनं बेअरफूटसंस्थाद्वारा हिमालये कार्यरतानां महिलासौराभियन्त्रीणां प्रशिक्षणार्थं व्ययीकर्तुं सः समीहते।

प्रत्युत्पन्नमतिः



वीरबलः

# नापितस्य दुरवस्था



१. वीरबलाय असूयावन्तः केचन सभाजनाः तस्य विनाशाय युक्तिं काञ्चित् अकुर्वन् । वीरबलः अवश्यं नाशं गच्छेत्, किन्तु कथम्? ते सर्वे परस्परम् ऐक्षन्त। तेषु एकः अस्फुटम् अवदत्, '' अस्ति कश्चन उपायः''



२. सः सदस्यः राज्ञः नापितं दृष्ट्वा स्वस्य उपायं कथितवान्।'' इदं धनं स्वीकरोतु; वीरबलः नाशं गच्छतु।'' इति । नापितः अपि प्रत्यशृणोत् ,'' तथैव भवेत्।''इति।



३. अन्येद्युः सः बादशाहम् अपृच्छत्,'' हुजूर! स्वर्गे भवतः मृतपूर्वजानां का स्थितिः इति किं ज्ञातुं न इच्छति? अकबरः अपृच्छत्,'' अपि शक्यमेतत्?''



४. ''अथ किम्? यदि वीरबलः ज्वलन्त्यां चितायाम् उपविश्य स्वर्गं गन्तुं शक्नुयात्। तस्मिन् समये महाराज अहं निरन्तरं मन्त्रपठनरतः भविष्यामि येन सः न मृतः भवेत्।'' इति आश्वासयत् नापितः।



५. एतस्याः कूटरचनायाः विषये वीरबलः अजानात्। सः चितामश्वतः स्वगृहपर्यन्तम् एकं खातं कृतवान्।'' इतः पलायनं कृत्वा एतं दुष्टनापितं सम्यक् पाठं पाठयिष्यामि।''



६. वीरबल: चितायां उपवेशित:। चिता च प्रज्वालिता। तत: पलाय्य , एकमासं यावत् गृहे स्थित्वा वीरबल: स्वस्य केशान् वर्धितवान्, सुदीर्घं स्मश्रु च तस्य मुखे विलसति स्म।



७. यदा स: राजसभां प्रविष्ट: तदा अकबर: तम् अपृच्छत्,' अरे वीरबल,कदा प्रत्यागतवान्? तत्र मम पूर्वजानां दर्शनम् अभवत् वा?'' ''आम्, महाराज! परन्तु तेषाम् एका समस्या अस्ति।'' वीरबल: अवदत्।



८. अकबर:,''का सा?'' वीरबल: अवदत्,'' महाराज तेषां सर्वेषां सुदीर्घा: केशा: दीर्घाणि श्मश्रूणि च जातानि। किं तेषां समस्यापरिहारार्थं राजनापितं तत्र प्रेषयाम:?'' अकबर: अपि '' कुतो न प्रेषयाम:?'' इति नि:श्वस्य अवदत्।



९. अचिरादेव नापित: चितायां स्थापित:। चिता च प्रज्वालिता। वीरबल: मन्त्रान् पठन् आसीत्। नापित: उच्चै: आक्रोशत्,''कृपया रक्षतु माम्!'' तदा अकबर: वीरबलस्य चातुर्यम् अवगतवान्।

## पुस्तकसङ्केत:

**यदा** भवन्त: किमपि पुस्तकं क्रीणन्ति तदा पुस्तकस्य मलपृष्ठे ISBN-80-60001-33-4. इदृशीं संख्यां पश्यन्ति भवन्त:। सा संख्या पुस्तकस्य संकेत: इति यदि वयं वदाम: तर्हि किं भवन्त: विश्वसन्ति? विश्वासं कुर्वन्तु उत न परन्तु सत्यमेतत्। ISBN नाम International Standard Book Numbering, पुस्तकानां क्रमाङ्कदाने उपयुक्ता अन्ताराष्ट्रीय गणनापद्धति:। यदा कश्चन प्रकाशक: कस्यचित् पुस्तकस्य काश्चित् प्रतय: मुद्रापयति तदा स: विशिष्ट्ं क्रमाङ्कूटं स: उपयोजयति। तस्यां संख्यायां १० संख्या: भवन्ति। प्रथम: भाग: कस्मिन् देशे पुस्तकं मुद्रितं तद्विषये बोधयति। द्वितीय: भाग: प्रकाशकस्य द्योतक:। तृतीय: भाग: 'शीर्षकद्योतक:' इति उच्यते। तथा च चतुर्थ: भाग: 'प्रमाणसंख्या' इति कथ्यते।

# चित्रमञ्जूषा

अस्मिन् मासे वृक्षाणां चित्रैः चित्रपुस्तिकां निर्मास्यामः



नीलगिरिः



बेओबॅब



परीरवृक्षः



आमलकः



सिन्दूरः



देवदारुः

